कार्तिकमार्गशीर्षपुष्याणाम् अंकत्रयसंवलिता

॥ श्रीशः शरणम् ॥

# मधुरवाणी

संस्कृतमासपत्रिका

---


प्रधान सम्पादकः

पं. गलगलीरामाचार्यः

संस्कृतसाहित्यरत्नम्

सम्पादकः

पं. बुर्लीश्रीनिवासाचार्यः

संस्कृतसाहित्यभूषणम्

सहसम्पादकः

पं. गलगलीपण्ढरीनाथाचार्यः

सं. सा. सुधाकरः


---


वार्षिकं मूल्यम् रूप्यकचतुष्टयम्

# अनुक्रमणिका.

॥ श्रीशः शरणम् ॥

सुधानिष्यन्दिन्या मधुरमधुरालापकलया
खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा
वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

११ वर्षे ] १८६६ शाक कार्तिकस्य [ १ सञ्चिका

राधाधरमधुस्यन्दमिलिन्दाय मधुद्विषे ।
कृष्णापटकुविन्दाय गोविन्दाय नमोऽस्तु नः ॥

## मङ्गलम् ( प्रार्थना )

यौरोपः समरानलः समशमत्स्वामिन् ! परं भारते
तन्मूलाऽपि सुदारुणोरुजठरज्वाला समुज्जृम्भते ।
धान्यानां निचये महत्यपि जना नित्योपवासव्रताः
वस्त्राणां निकरेऽपि दिग्वसनकाः, श्रीवल्लभ ! त्राहि नः ॥ १ ॥

मुक्तो नेतृगणश्चिरादपि हरे ! त्वज्जन्मभूमेः पुरा
कारामन्दिरतः परं परवशं राष्ट्रं तथैव स्थितम् ।

हिन्दूनां यवनैश्च हिन्दुषु मिथः काङ्ग्रेस—हिंन्दूसभा
सद्वर्णाश्रमसङ्घसङ्गमिषतो भेदो महानुद्यतः ॥ २ ॥

दास्याभ्यासवशादनल्पसमयान्निर्दग्धवीर्याङ्कुरम्
निस्तेजस्कमथालसं सकलहं स्वीयाभिमानोज्झितम् ।
भोगासक्ततया परानुकरणं दारयेऽप्यलज्जावहम्
शौरे ! भारतमद्य भग्नमवितुं त्वामन्तरा कः क्षमः ॥ ३ ॥

'धर्मो धर्म' इति प्रगल्भवचसः स्वाध्यायिनो भूसुराः
सामर्थ्यं न हि दर्शयन्ति तपसो नो वाऽस्त्रविद्याबलम् ।
राजानो निजपूर्वजार्जितधनैः स्वैरं विहारोत्सुकाः
देशोऽयं परतन्त्रताख्यनिगडान्मुक्तः कथं स्यात्स्वयम् ॥ ४ ॥

नेतारो जनतैक्यसाधनमिषाद्धर्मप्रणाशव्रता
निस्सत्वैरनपायदैश्च करणै राज्यं जिघृक्षन्त्यहो ।
साम्राज्यं परमाणुशस्त्रमदतो मथ्नाति दीनाः प्रजाः
दीनोद्धार ! विपन्नभारतमिदं रक्ष त्वमेवाधुना ॥ ५ ॥

---

# नव्यवत्सरारम्भः

---

उगमस्थले नितान्तमणीयसी तदनु मध्ये क्वचिद्दृश्या ततः पुनश्च सवेगं प्रवहत्युभयकूलङ्कषा महानदी, तथैव मधुरवाणी दशमवत्सरस्यारम्भेऽल्पशरीरा मध्येऽनुभूतविश्रान्तिरपि नितरामायासितसम्पादकचित्ता पुनश्च सोत्साहं सम्मेलनाङ्क—कालिदासाङ्करूपेण प्रदर्शितविशालस्वरूपा संप्रति वर्षेऽस्मिन्नेकादशे प्रकृतिमापन्ना नियतसमये नियताकारा सुरवाणीसेवार्थं प्रणयिवाचकजनमनः-प्रीणनाय च भगवतो भक्तवत्सलस्य भार्गवीभागधेयस्य श्रीपद्मनाभस्य भव्यावहया करुणया वाचकमहाशयानां शुभाशंसया च प्राभवदात्मानं प्रकाशयितुमिति यत्सत्यं मोमुदीति नश्चेतः । समये कृतकर्तव्यस्य कस्य वा न मोदेत

मनः ? । श्रीविष्णुपादाम्बुजावलम्बिनी सहृदयशिवशिरश्चुम्बिनी अपारसंस्कृत-वाङ्मयाकूपारगामिनी विमलरसोद्भासिनी संतर्पितविबुधावलिः संपादकभगीरथ-चिरसञ्चिततपोराशिफलायमाना सुरवाणीसंस्तवा मधुरवाणीसुरतरङ्गिणीयं सहस्राधिकवाचकजलमुचां कृपावृष्टिपरिपुष्टा वदान्यजनोदारतायमुनासङ्गम-परिवृद्धसौभाग्या च विलसेदेव वसुधातलेऽ विरतमिति महीयस्याशंसा, बल-वत्याकाङ्क्षा, द्रढीयांश्च प्रयत्नो नः । तत्सर्वस्याऽपि साफल्यं विपुलग्राहकोदार-सुरतरुसमायत्तमेवेति न खलु न विदितं प्रेक्षावद्भिः । तदस्तु

पुनःपुनरेवं वाचकजनयाचनालाघवेन नितरामपत्रपमाणा मधुरवाणी सकृदेव साग्रहं सविनयं च संप्रार्थ्योदारान् संस्कृतप्रणयिनः, संपादयितुं पञ्च-विंशतिसहस्ररूप्यात्मकं शाश्वतनिधिं, तं च विश्वस्ता ( ट्रष्ट ) धीनं विधातु-मुद्युक्तेदानीम् । तदेतत्सार्वजनिकसर्वोपकारकपवित्रकर्मणे साहाय्यदानाय महाजनैरेका विज्ञप्तिपत्रिका प्रकटिता स्वनामाक्षरदानेन । सेयं पत्रिकाऽस्मिन्ने-वाङ्केऽन्यत्र प्रकाशिता । तामनुवाच्य वदान्यैर्धनिकैः सहस्रशः, सम्पन्नै-र्ग्राहकैः शतशः, तदन्यैर्वाचकैर्दशाधिक यावच्छक्यं धनं वितीर्य मधुरवाणी-स्थैर्यमुक्तनं सुरवाणीसमुन्नतिश्रेयश्च सम्पाद्यतां सममेवेत्यभ्यर्थ्यते सप्रश्रयम् । सम्मेलितशाश्वतनिधेर्विश्वस्तसात्करणेनान्यथाभावशङ्काया नास्त्येवावकाशः । सर्वैः संस्कृतप्रणयिभिरत्र यदि सक्रियसहानुभूतिः प्रदर्श्येत, तर्हि मासादर्वागेव समीहितादप्यधिकार्थसिद्धिः स्यादिति द्रढीयान्नः प्रत्ययः । अत्रान्तरेऽस्म-त्प्रार्थनासमनन्तमेव कैश्चिदुदारचरितैर्महाभागैःशतशः साहाय्यधनं दत्तमत्या-दरेण । तेषां नामान्यन्यस्मिन्नेवाङ्के प्रकटितानि । अन्ये केचन महाशयाः प्रतिश्रुतवन्तः साहाय्यदाने । तत्प्राप्त्यनन्तरं तेषामपि नामधेयानि प्रकाश्येरन् । एवमितोऽपि ये साहाय्यं विदधीरन् तेषामभिधानान्यपि क्रमेण प्रत्यङ्कं प्रकटी-क्रियेरन् सानन्दम् । ये शतरूप्यकाणि दद्युस्ते निरन्तरं प्राप्नुयुर्मधुरवाणीं विना मूल्यम् । ये शतार्धमुद्रा अतिसृजेयुस्ते दशवर्षपर्यन्तममूल्यां विन्देरन् मधुरवाणीम् । पञ्चविंशतिरूपकाणि यैर्वितार्येत तैरापञ्चवर्षं लभ्येत मूल्य-मन्तरा । ये दशाधिकं विश्राणयेयुर्धनं ते वर्षत्रयं समासादयेयुर्मूल्यादृतेऽपि मधुरवाणीम् । केऽपि महानुभावाः प्रतिफलनिरपेक्षं साहाय्यं विदधीरंस्तर्हि सकार्तज्ञ्यं स्वीकुर्म एव सादरम् । एवं सर्वैरत्र कर्मणि त्वर्यतामित्येव निवेद्यतेऽ

स्माभिः । जाते च निधिसंग्रहे या पुरस्तनकार्यदिशा तामतीताङ्के एव व्यवृणम वयम् । तदवलोक्य समालोच्य च यावच्छक्यं साहाय्यं विदधीरन्नेव सर्वे सुरभारतीपरिचिता इति बलवती नः प्रत्याशा ।

---

## संस्कृतसमाचारः

---

श्रीमदुत्तरादिमठाधीश्वराः श्रीश्रीमत्सत्याभिज्ञतीर्थश्रीमच्चरणाः यतिवरेण्या आगामिनि वर्षे श्रीपाण्डुरङ्गक्षेत्रे पण्ढरपुरे संस्कृतमहाविद्यालयमेकं स्थापयिष्यन्ति, तत्कृते प्रत्यब्दं षट्सहस्ररूप्यकसाहाय्यं विधास्यन्तीत्युपश्रुत्य को वा संस्कृतविद्याप्रणयी नाभिनन्दयेत्सानन्दं सुकृतमिदम् । इमे एव महामान्याः प्रतिवत्सरं श्रीमध्वसिद्धान्ताभिवृद्धिकारिणीसभाद्वारा शताधिकाननेकशास्त्रपारङ्गतान् विदुषः, सहस्राधिकान् विद्यार्थिनश्च विपुलदक्षिणादानेन संभावयन्ति, प्रीणयन्तीति विदितमेव सर्वेषाम् । परं महाविद्यालयमन्तरा विदुषां चरितार्थ-प्रवचनसौकर्यं विद्यार्थिनामध्ययनसौलभ्यं दुर्घटमिति विचार्यैव यच्छ्रीस्वामिपादैर्महाविद्यालयस्थापनं विधास्यते तन्नितरां प्रशंसनीयं नितान्तमभिनन्दनीयं भृशमितरैरनुकरणीयं च सादरमित्यत्र न कस्याऽपि विप्रतिपत्तिः ।

साम्प्रतमर्थकर्या पाश्चात्यविद्यया वशीकृतचेतसः प्रायः सर्वेऽपि विद्यार्थिनः पारत्रिकमहोच्चफलमपि मनश्शान्तिप्रदमपि द्रव्यसम्पादनाक्षमतयैहिकसुखदूरं तिरस्करणीयमिभिक्षैकफलं सुधारकजनैरवमानकारणं च संस्कृतविद्याध्ययनमुदासते, नाद्रियन्तेऽवहेलयन्ति चेति सर्वानुभवसिद्धोऽयं विषयो नापलपितुमर्हति । ईदृश्यामवस्थायां वर्षे एकदैव एकस्याऽपिविद्यापर्याप्तदक्षिणाधनेन महाव्ययनिर्वर्त्ये संसारे पिपतिषवः पतिता वा छात्राः विद्वत्कुलप्रसूता अपि संस्कृतविद्याप्रणयिनोऽपि कुलपरम्परागतविद्याध्ययने कथं वा मनो विदधीरन् इति जटिलोऽयं प्रश्न इत्यन्यत् । परं ये केऽपि ऐहिकसुखनिरपेक्षा अध्यात्मानन्दैकलालसाः सन्ति अङ्गुलिगणनीयाः पुण्यभाजस्तेषामध्ययनकृतेऽपि इयदवधि न कोऽपि महाविद्यालयो नासीन्माध्वसमाजे । परमेतां महतीं न्यूनतामपजिहीर्षवः श्रीमदुत्त-

रादिमठाधीशश्रीचरणा यन्महाविद्यालयस्थापने मतिमकुर्वंस्तत्संस्कृतविद्यापुनरुज्जीवनदृष्ट्या, आर्यसंस्कृतिसंरक्षणापेक्षया सनातनधर्मोद्धारदृशा च प्राप्तकालमेवेति मन्यामहे। विरक्तशिखामणिभिः परम्परागतविपुलस्थावरजङ्गमसंपत्तिशालिभिः पीठाधीश्वैर्यदवश्यमिदानीं करणीयमासीद् हन्त! तदेव कालोचितमितराप्रार्थितैरपि श्रीमदुत्तरादिमठाधीशैः प्रथमतया इतरानुकरणीयतया करिष्यते, तत्कृते सहस्रशः प्रणामाञ्जलयः समर्प्यन्ते सानन्दं सभावोद्रेकातिशयं च।

---

नैकविद्याभाण्डागारायमाणाः वयसा युवानोऽपि वैराग्येण वृद्धाः सदा पाठप्रवचनैकातिवाह्यमानसमयाः श्रीश्रीभण्डारागिरिश्रीस्वामिपादा अतीतमाघमासे मध्वनवम्यां द्वैतवेदान्तोद्ग्रन्थान्परीक्ष्य समुत्तीर्णान्विद्यार्थिनः समुचितदक्षिणया, पण्डितांश्च सम्भावनादिभिः सत्कृत्य समतोषयन्निति वयमपि सन्तुष्यामस्तमाम्। इमे महाभागा अननुकूलसम्पदोऽपि कार्यमेतन्महत्तरं निरवर्तयन्निति श्लाघ्यतममेतत्पवित्रं कर्मावश्यमुदारैः साहाय्यदानेन समुत्तेजनीयमिति बलवदाशास्महे।

---

मद्रप्रान्ते येर्पेडोनगरे तत्रत्यैः कैश्चन संस्कृतप्राणैर्महाशयैः संस्कृतविद्योज्जीवनाय स्थापिता परीक्षासमितिरेकाऽस्मिन्नेव वत्सरे। परीक्षापाठ्यक्रमश्चास्मिन्नङ्के प्रकटितः। समितिरेषा सुलभसंस्कृतग्रन्थानेव परीक्षायां पाठ्यतया नियुज्य तदुत्तीर्णेभ्यो यत्पदवी प्रदीयते, तेन विद्यार्थिनः संस्कृतविद्याध्ययनेसमुत्साहिनः स्युरिति नितान्तमभिनन्दनीयोऽयं क्रमः समितेः स्थापकानां चालकानां च।

---

उत्तरभारते अग्र (आग्रा) पत्तने कुशाग्रधीमुषीकैः कैश्चन महाभागैः, तथा मोहमयीनगरे श्रीमुन्सीमहाशयैश्च सर्वोच्चभारतीयसंस्कृतिलोपघ्नाया विदेशेऽपि भारतगौरवैकजीवातुभूतायाः सर्वविद्यामूलभूताया विश्वविषयैकाकरायमाणायाः संस्कृतविद्यायाः पुनरुज्जीवनाय पोषणाय प्रसाराय समुत्कर्षाय च विशालमेकैकं विश्वविद्यालयं (युनिवर्सिटि) स्थापयितुं निश्चितम्। न केवलं निश्चितम्, कार्ये प्रवृत्तं च। सङ्गृहीतश्च नैकलक्षात्मकधनराशिः। तस्मा-

द्विश्वविद्यालयात्प्रतिप्रान्तमेकैको महाविद्यालयः प्रवर्तनीयः इत्यपि सङ्कल्पः कृतः। इतोऽपि पुरतो गत्वा आन्ध्रविश्वविद्यालयस्थापकानामालोचना—आदर्शार्थं संस्कृतनगर्यप्येका निर्मापणीया, यत्र वसन्तः सर्वेऽपि जनाः सर्वमपि व्यवहारं संस्कृतयैव गिरा विदध्युः। विश्वविद्यालयाभ्यां परिक्षासमितिं केन्द्र-स्थानानि च व्यवस्थाप्य परीक्ष्य विद्यार्थिभ्यः पदव्योऽपि प्रदास्यन्ते। विश्व-विद्यालयाविमौ आङ्ग्लविश्वविद्यालयसाम्यं यथा भजेतां तत्र धृतपदवीकाः पाश्चात्य विद्यापदवीधरसमकक्षां यथा समासादयेयुस्तथा प्रयतेते। एतत्प्रवर्त्स्यमानमहा-विद्यालयेषु न केवलं संस्कृतविद्या अध्याप्यन्ते, किन्तु संस्कृतप्राधान्यमवस्थाप्य तस्याधुनिकबलसंवृद्धये कार्यक्षमतायै च इतरपाश्चात्यविद्यासाङ्गत्यमप्यमुख्यतया दीयते। तेन एतद्विश्वविद्यालयपदवीधराः प्राचीनविद्यापारङ्गताः आधुनिक-विवेचकशक्तिभाजः सर्वाङ्गशिक्षणसंपन्नाश्च समाजस्य राज्ञां च सभाजना-भाजनीभूतं गौरवमात्मीयमात्मदेशीयं प्राचीनविद्यानां च रक्षेयुर्वर्धयेयुश्चेति चाल-कानां महती श्लाघनीया चाकाङ्क्षा। विश्वविद्यालयाभ्यामाभ्यां प्राचीनग्रन्थ-संशोधन—प्रकाशनादिकं संस्कृतपत्रिकासंचालनं च निर्धारितमित्यहो संस्कृतस्य भाग्यम्। नितान्तमभिनन्दनीयमेतेषां चालकानां व्यवसितम्। सहार्दमभि-नन्दामस्तमां सर्वथा सर्वतःश्रेयस्करमेतदवदानम्। आशास्महे च विश्वविद्यालय-योरनयोः सत्वरं कार्योन्मुखत्वं सिद्धिप्रवणतां साधनसाकल्यं प्रयत्नसाफल्यं च।

---

मद्रप्रान्ते पञ्चसरोवराभिधे प्रसिद्धे पवित्रे क्षेत्रे बहोः कालात्प्रचलितया श्रीमध्वसिद्धान्तोन्नाहिनीनाम्न्या सभया स्वप्रतिष्ठापितं महाविद्यालयं धनोत्पादक-पाश्चात्यविद्यालोभेन विद्यार्थिविरहितयाऽसफलमालोक्य पुनर्द्वैतवेदान्तविद्या-ध्ययनमानसा विद्यार्थिनः, निरपेक्षं पाठप्रवचनशीला विद्वांसोऽपि समुचितसंभा-वनया प्रोत्साहनीया इति पूर्ववत् किंचिदिव व्यत्यस्य द्वैतवेदान्तग्रन्थपरीक्षा व्यवस्थापितेति निशम्य समये समुचितमेव कृतमित्यभिनन्दामस्सानन्दम्। परिक्षेयमागामिनि दिशाम्बरमासे भवितेति।

---

# अनौचित्यनिरासः

ले. पण्डित राजराजेश्वर शास्त्रि द्रविडमहाभागाः साङ्गवेदविद्यालय बनारस

कैश्चित् "कुमारसम्भवे" शिवपार्वतीसम्भोगशृङ्गारवर्णनमत्यन्तमनुचितमिति दूषणमाविष्कृतम्, यच्च तद्वशात् कालिदासस्य कुष्ठव्याधिसमुद्गमः समभवदित्यादिकमुक्तं तत्र विचारयामः—

यदत्र सम्भोगशृङ्गारवर्णनेऽनौचित्यमाविष्क्रियते तत्र दूषकताबीजस्य किं नाम स्वरूपम्? तत्र तावत्साहित्यशास्त्रानुसारेण दुष्यन्तशकुन्तलादिरतिवर्णनस्थलेऽपि अप्रामाण्यज्ञानानास्कन्दितागम्यात्वप्रकारकशकुन्तलादिविशेष्यकनिश्चये सति तद्विषये स्वात्मनि रतेरुद्गमे सभ्यानां पातकाद्युद्गमप्रसङ्गमाशङ्क्य साधारणीकरणव्यापारस्य तादृशबुद्धिप्रतिबन्धकत्वात् साधारण्येनैव रतेरास्वाद्यत्वेन सम्भवतीत्यभिनवगुप्तपादादीनां सर्वेषामेव मतमाविष्कृतं रसगङ्गाधरे। साधारणीकरणञ्च काव्यजनितेनाप्रथमेन व्यञ्जनजनितव्यभिचारिबोधेन विषयीकरणमिति शास्त्रतत्त्वम्। तस्यास्य साधारणीकरणव्यापारस्य पित्रोरिवोत्तमदेवताविषयकशृङ्गारवर्णनस्थलेऽपि नास्त्येवास्तित्वम्। तदुक्तं रसगङ्गाधरे—

"तत्र रत्यादीनां भयातिरिक्तस्थायिभावानां सर्वत्र सत्त्वेऽपि रतेः सम्भोगरूपायाः मनुष्येष्विवोत्तमदेवतासु स्फुटीकृतसकलानुभाववर्णनमनुचितम्। क्रोधस्य च लोकभस्मीकरणपटोर्दिनरात्रिव्यत्ययाद्यनेकाश्चर्यकारिणो दिव्येष्विवादिव्येषु आलम्बनगताराध्यत्वस्य अनुभावगतमिथ्यात्वस्य च प्रतीत्या रसस्यानुल्लासापत्तेः। न च साधारणीकरणादाराध्यत्वज्ञानानुत्पत्तिरिति वाच्यम्। यत्र सहृदयानां रसस्योद्बोधः प्रमाणसिद्धस्तत्रैव साधारणीकरणस्य कल्पनात्। अन्यथा स्वमातृविषयकस्वपितृविषयकरतिवर्णनेपि सहृदयस्य रसोद्बोधापत्तेः"।

अनादिवासनाविशेषस्य प्रत्यक्षायमाणाया देहादावात्मबुद्धेरिव दृढतरप्रत्यक्षायमाणबुद्धेर्जननसमर्थस्य नाम व्यञ्जनेति साहित्यविदां मर्यादा। तादृशस्थले संस्कारविशेषोद्बोधः सम्भोगादिवर्णनेन सहृदयानां नास्त्येवेति हि रसगङ्गाधरोक्तलेखादवगम्यते। अत एव संवीतगुप्तलक्षितेषु शिवलिङ्गभगिनी-

ब्रह्माण्डादिशब्देषु असभ्यार्थव्यञ्जनं न भवत्येवेति सहृदयानामैकमत्यमेव। भगिनीशब्दस्य सर्वैरेव साहित्यसम्मेलनैर्भारतवर्षीयैः प्रयुज्यमानत्वमपि दृश्यते, तदप्यत एव। तदुक्तं काव्यप्रदीपे—"शिवलिङ्गभगिनीब्रह्माण्डशब्देषु तु समुन्नीतगुप्तलक्षितेषु असभ्यार्थानुपस्थितेः"। अत्रोद्योतटीकायां नागोजिभट्टः—

"समुन्नीतेत्यादि। अविगीतानादिप्रयोगयोगित्वे सति भगवदादिसम्बन्धित्वं समुन्नीतत्वम्। इदमेव संवीतमित्युच्यते। शिवलिङ्गशब्दस्य जगदन्तर्यामिभगवति प्रसिद्धेः व्रीडाजनकार्थाऽप्रतीतिरेव। तत्त्वे सति रूढ्यर्थातिरिक्ताश्लीलार्थस्य योगेन अनुपस्थापकत्वं गुप्तत्वम्। अत्र हि रूढ्यर्थस्य झटित्युपस्थित्या तद्भावनया योगार्थस्य तिरोधानम् यथा भगिनीत्यत्र। ग्राम्यस्मृतिजनकैकदेशवत्वं लक्षितत्वम्। ब्रह्माण्डादिपदं हि समुदायरूढ्या झटिति सभ्यमर्थमेवोपस्थापयति। न त्ववयवेन असभ्यमिति न दोषः" इति। अत्रेदं बोध्यम्—

कस्यचिन्नूतनकोशग्रन्थस्यालोचनं कुर्वाणया कयाचित्पाश्चात्यमहिलयोक्तः कोशसम्पादकस्त्वदीयग्रन्थोऽत्यन्तमश्लीलो यतोऽश्लीलशब्दा एव मया दृष्टास्तत्रेति। तां प्रति कोशसम्पादक एवमुत्तरयति—भद्रे! त्वदीया बुद्धिरेव नूनमश्लीला यन्मदीये कोशेऽश्लीलशब्दा एव त्वयान्विष्टाः। कोशस्य तु सर्वविधशब्दसंग्राहकस्य नात्र दोषोऽणुमात्रमपीति। तेनैव न्यायेन सन्त्येव केचिच्छिवलिङ्गादिशब्देष्वपि पुरोभागिनः। तादृशानां काममस्तु शिवलिङ्गदर्शनं निषिद्धम्। नैतावता सहृदयानां किञ्चिद्धीयते। तथैव पित्रोः सम्भोगवर्णनस्थल इवोत्तमदेवताशृङ्गारवर्णनस्थले साधारणीकरणात्मकं व्यञ्जनं नास्त्येवेति सिद्धम्। अधर्मजनकत्वेन व्रीडापातकादिसम्भवः श्रोतुर्वर्णयितुरस्ति न वेत्येव प्राधान्येनाधुना विचारणीयतामर्हति। तत्राहुर्वैष्णवाः साहित्यकौमुदीकारप्रभृतयः—

"यत्तूत्तमदेवतानां जगत्पितृत्वात् तत्सम्भोगवर्णनं दोषावहमित्युक्तं तत्किल शिवादीनामेव। श्रीकेशवयोस्तु प्रागुक्तहेतोर्विधिवीक्षणाच्च कार्यमेव तदिति" तत्र टीका—"प्रागुक्तहेतुर्भावुकचित्तानुसारित्वम्। विधिवीक्षणञ्च-

"विक्रीडितं व्रजवधूभिरिदञ्च विष्णोर्यः श्रद्धयाऽनुशृणुयादथ वर्णयेद्यः।
भक्तिं परां भगवति प्रतिलभ्य कामं, हृद्रोगमाश्वपहिनोत्यचिरेण धीरः॥

धर्माधर्मयोर्हि शास्त्रीयविधिनिषेधवाक्यप्रमाणका वयम्। अत एव यज्ञीयपशुहिंसा धर्म इत्यभ्युपेयते। श्रीकेशवादीनां शृङ्गारवर्णने विधिरस्ति यतोऽतस्तत्र पातकसम्भावना नास्त्येव, प्रत्युत हृद्रोगापरपर्यायकामादिवासनोच्छेद एव फलमिति सधीरमङ्गीकुर्मः। अतएव शिष्टै रासलीलादिदर्शनमधुनाऽपि क्रियते। अत एव श्रीकृष्णादयः पातकिनः पारदार्यादिमत्वात् इत्याद्यनुमितेः अनीश्वरत्वमिथ्याज्ञानजन्यवासनाद्युपाधिप्रतिरुद्धत्वेन—

"नैतत्समाचरेज्ज तु मनसापि ह्यनीश्वरः"।
"तेजीयसां न दोषाय वन्हेः सर्वभुजो यथा"।

इत्यादिनोक्तत्वेन तदीयपारदार्यादेरपि हेतूक्तस्य बाष्पे धूमभ्रमवदाभासरूपस्य च "उज्ज्वलनीलमणिटीका" दिषु पुराणादिवचनावष्टम्भेन सम्यक् स्थापितत्वेन च तेषां नित्यनिर्दोषत्वेन पूर्वोक्तवचनैस्तदीयलीलादर्शनस्यापि विहितत्वेन भागवतटीकाकर्तृभिः सर्वैरेवाचार्यैः समादृतत्वात्। अवैधस्य तस्य हृद्रोगजनकस्यापि वैधस्य तस्य तज्जयजनकत्वञ्चैत्रम्।

शास्त्रपरतन्त्रस्य समाजस्य श्रीकेशवसम्भोगशृङ्गारवर्णनेनापि निर्विकारत्वं, हृद्रोगजेतृत्वञ्च सम्यगेव सिद्ध्यति। कुमारसम्भववर्णनेऽप्ययमेव न्यायोऽस्मत्पूर्वजैः प्रतिपादितः। तथाहि श्रीमद्वाल्मीकीये आदिकाव्ये बालकाण्डे—

"एष ते राम! गङ्गाया विस्तरोऽभिहितो मया।
कुमारसम्भवश्चैव धन्यः पुण्यस्तथैव च॥
भक्तश्च कार्तिकेये यः काकुत्स्थ भुवि मानवः।
आयुष्मान् पुत्रपौत्रैश्च स्कन्दसालोक्यतां व्रजेत्"॥

अनेन हि निदर्शनेन शिवपार्वत्योः सम्भोगशृङ्गारघटितकुमारसम्भव-कथायाः पुण्यजनकत्वं स्पष्टमेव सिद्ध्यति । श्रीमद्रामायणस्य स्पष्टीकरणार्थं पद्मपुराणस्य सृष्टिखण्डस्थितानि कानिचिद्वचनान्युद्ध्रियन्ते । तथाहि—

"यः पठेत्स्कन्दसम्बद्धां कथामेतां महामतिः ।
शृणुयाच्छ्रावयेद्वापि स भवेत्कीर्तिमान्नरः ॥
बह्वायुः सुभगः श्रीमान् कीर्तिमान् शुभदर्शनः ।
भूतेभ्यो निर्भयश्चापि सर्वदुःखविवर्जितः ॥
सन्ध्यामुपास्य यः पूर्वां स्कन्दस्य चरितं पठेत् ।
स युक्तः किन्नरैः सर्वैर्महाधनपतिर्भवेत् ॥

इति कुमारसम्भवतारकवधो नाम षट्चत्वारिंशोऽध्यायः ।"

एवञ्च सुभगत्वकीर्तिमत्त्वशुभदर्शनत्वसर्वदुःखविवर्जितत्वस्कन्दसालोक्यादिप्रयोजकत्वादिमहाफलप्रदायाः कुमारसम्भवकथायाः वर्णनेन कविकुलगुरोः कुष्ठव्याध्युद्भववर्णनं यत् कैश्चित् कृतं तत् तेषां शास्त्रैकप्रमाणकधर्माधर्मानभ्युपगन्तॄणां बौद्धादिसामाजिकवत् कुवासनोद्गममात्रविषये समाशङ्क्य तत्प्रतिरोधेच्छया कारुण्यमूलकं न वेति त एव व्यक्तीकर्तुं शक्नुवन्ति । अत एव शास्त्रैकशरणरहितानां स्थूलबुद्धीनां पुरतः रासादिवर्णनं हरिभक्तिरसामृतसिन्धूज्ज्वलनीलमण्यादिग्रन्थेषु व्यवस्थापितं युज्यते ।

"विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय न मा ब्रूया अवीर्यवती तथा स्याम्" ॥

इति श्रुतिश्चामुमेवार्थं पुष्णाति । एवञ्च कुमारसम्भववर्णनस्य विधिवीक्षणादेव "शिवादीनां सम्भोगवर्णनमनुचितम्" इति साहित्यविदामुक्तेः कुमारसम्भवातिरिक्तविषयत्वमेवेति सिद्ध्यति । अत एव—

"व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे,
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि ।

मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे,
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वं" ॥

इत्यादि तु युक्तम्—

" औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया,
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे,
संरोहत्पुलका हरेण हसताऽऽश्लिष्टा शिवायास्तु वः" ॥

इत्यत्र "सञ्चारिणः स्वपदेनोक्तावपि न दोष" इत्यादिकाव्यप्रकाशोक्तिरपि सङ्गच्छते, कुमारसम्भवविषयत्वात् । तथा च कुमारसम्भववर्णनं कविकुलगुरोः कालिदासस्य साङ्कुशतामेवाभिव्यनक्ति इति सिद्धम् ।

अथ यच्चोक्तं कैश्चित्—

" ऐन्द्रिः किल नखैस्तस्या विददार स्तनौ द्विजः ।
प्रियोपभोगचिन्हेषु पौरोभाग्यमिवाचरन् ॥ "

इति रघुवंशीये द्वादशे सर्गे द्वाविंशश्लोके उद्वेगजनिकोक्तिः कालिदासस्य । तत्र चेमानि कारणानि—

प्रियस्य रामस्य उपभोगचिन्हेषु काकस्य दोषोद्भावनरूपपौरोभाग्यवर्णनं हि उत्तमनायकश्रीरामचन्द्रस्य अवैदग्ध्यं सूचयति । तथा स्तनयोः वर्णनं जगन्मातुः अनुचितम् । एवं श्रीमद्वाल्मीकीये रामायणे तदनुल्लेखादितिहासविरुद्धम् । भिल्ल्यादीनामिव मातुरपि जानक्याः कौपीनादिधारणं विना स्तनयोरनावृतत्वासंभवात् वेषानौचित्यकरं च । पादयोरेव चञ्चुप्रहारवर्णनं कुर्वतः तुलसीदासमहोदयस्यैव अत्र प्रामाण्याद् अस्मिन्नर्थे अधिकं प्रमाणमनपेक्षितमेवेति ।

अत्रेदं चिन्तनीयम् । श्रीमद्वाल्मीकीयरामायण एव जगज्जनन्या जानक्यैव सुन्दरकाण्डे हनूमन्तं प्रति स्वकीयाभिज्ञानरूपेण मणिरत्नं

दत्वा अन्यैरविदितं स्वकीयाभिज्ञानमिति कृत्वा अयं वृत्तान्तो वर्णितः। तथा हि—

इदं श्रेष्ठमभिज्ञानं ब्रूयास्त्वं तु मम प्रियम्। शैलस्य चित्रकूटस्य पादे पूर्वोत्तरे पदे॥ तापसाश्रमवासिन्याः प्राज्यमूलफलोदके। तस्मिन् सिद्धाश्रये देशे मन्दाकिन्यविदूरतः॥ तस्योपवनखण्डेषु नानापुष्पसुगन्धिषु। विहृत्य सलिले क्लिन्नो ममाङ्के समुपाविशः॥ ततो मां स समायुक्तो वायसः पर्यतुण्डयत्। तमहं लोष्टमुद्यम्य वारयामि स्म वायसम्॥ दारयन् स च मां काकस्तत्रैव परिलीयते। न चाप्युपारमन्मांसाद्भक्षार्थी बलिभोजनः॥ उत्कर्षन्त्यां च रशनां क्रुद्धायां मयि पक्षिणे। स्रंसमाने च वसने ततो दृष्टा त्वया ह्यहम्। त्वया विहसिता चाहं क्रुद्धा संलज्जिता तदा॥ भक्ष्यगृद्धेन काकेन दारिता त्वामुपागता। ततः श्रान्ताहमुत्संगमासीनस्य समाविशम्॥ क्रुध्यन्तीव प्रहृष्टेन त्वयाहं परिसान्त्विता। बाष्पपूर्णमुखी मन्दं चक्षुषी परिमार्जती॥ लज्जिताऽहं त्वया नाथ! वायसेन प्रकोपिता। परिश्रमाच्च सुप्ताहं राघवांकेऽस्म्यहं चिरम्॥ पर्यायेण प्रसुप्तश्च ममाङ्के भरताग्रजः। स ततः पुनरेवाथ वायसः समुपागमत्॥ ततः सुप्तप्रबुद्धां मां राघवाङ्कात् समुत्थिताम्। वायसः सहसागम्य विददार स्तनान्तरे॥ पुनः पुनरथोत्पत्य विददार स मां भृशम्। ततः समुत्थितो रामो मुक्तैः शोणितबिन्दुभिः॥ वायसेन ततस्तेन बलवत् क्लिश्यमानया। स मया बोधितः श्रीमान् सुखसुप्तः परंतपः॥ स मां दृष्ट्वा महाबाहुः वितुन्नां स्तनयोः सदा। आशीविष इव क्रुद्धः श्वसन् वाक्यमभाषत॥ केन ते नागनासोरु! विक्षतं वै स्तनान्तरम्। कः क्रीडति सरोषेण पंचवक्त्रेण भोगिना॥ वीक्षमाणस्ततस्तं वै वायसः समवैक्षत। नखैः सरुधिरैस्तीक्ष्णैर्मामेवाभिमुखं स्थितम्॥ पुत्रः किल स शक्रस्य वायसःपततां वरः। धरान्तरं गतः क्षिप्रं पवनस्य गतौ समः॥" इति।

तथा च पञ्चसु कारणेषु इतिहासविरुद्धत्वं सर्वथा निरस्तम्। पितुर्मातुर्वा उद्वेगजनकत्वं तु मात्रा स्वयमेव वर्ण्यमानत्वात् नास्तीति वक्तव्यमापतति इति। अत्र प्रस्तावसरं विश्वगुणादर्शकवेरपि पद्यमपवर्ण्यते—

पातिव्रत्यमुपेत्य नित्यमनघाचारावदातात्मनाम्,
चोलीनां यदि कञ्चुकी न कुचयोर्मोलीमसी का ततः।

नारीणां सुरतोपयोग्यवयस्पर्धाकृतिर्दोष इ-
त्युक्तं चेदधरापिधानमपि किं न स्यात् सदा वाससा॥ इति।

अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः॥

इत्यत्रापि कुतो न दोष आविष्कृत इत्यादिकमपि अत एवोपपद्यते। देवीसर्वावयववर्णनानि महाकविकृतानि च अत एवोपपद्यन्ते। भक्तध्येयत्वादपि। अन्यथा मन्दिरेषु प्रतिमानिर्माणं तत्तदवयवांशे निर्मूलं स्यात्।

"प्रियोपभोगचिन्हेषु पौरोभाग्यमिवाचरन्" इत्यत्रापि हेतूत्प्रेक्षेयम्, तथा हि इवार्थः संभावना। पौरोभाग्यं काकनिष्ठं वक्तुमुचितम्। तथा च संभाव्यमानकाकनिष्ठपौरोभाग्यहेतुकत्वं विदारणे तात्पर्यविषयः। तत्र दूषणाविष्करणरूपं दूषणं यदि काकनिष्ठं तदा मन्दमतेस्तस्य निर्णयेन कथं रामचन्द्रस्य अवैदग्ध्यं सिद्ध्यति?।

चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितघटनासंविधाता विधाता।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः॥

इति स्वभावत एव मूर्खस्य काकस्य माध्यस्थ्यमवलम्ब्य कथं वोत्तमनायकस्य श्रीरामचन्द्रस्य अवैदग्ध्यं गृण्हीमः?।

इवार्थस्य संभावनायाः सीतारामनिष्ठत्वेनापि उपपद्यमानायाः कविनिष्ठत्वमनावश्यकमेव। प्रथमतः काकेन आयासितायाः मातुः स्रस्तवसनत्वेऽपि भगवतो न क्रोधः। किन्तु हासमात्रस्य उद्भवः, अनन्तरं तु असह्यक्रोधोद्भवः इति हि वर्णनं सुन्दरकाण्डे अस्मिन् पश्यामः। तत्र किं कारणमित्याकांक्षायां समुचित-

मिदमुत्तरं एतत्संभावनमेव। अत एव "कः क्रीडति सरोषेण पंचवक्त्रेण भोगिना" इत्याद्युक्तिरीतिरपि अत्रोपपद्यते। अन्यथा सामान्यस्य काकस्य विषये एवंविधः क्रोधोद्गमः भगवतो महावीरतामेव कलङ्कयेत्। स्तनदर्शनप्रसंगश्च आयासस्रस्तवसनत्वेनापि उपपन्नः न भिल्लीवत् कौपीनवेषत्वमापादयति। एकेन रामेण ज्ञातस्यैव कस्यचिद्वृत्तान्तस्य हनूमद्द्वारा प्रतिपादनं हि हनूमता सीता दृष्टेत्यभिज्ञानचिन्हं भवितुमर्हति। अत एव रहस्यत्वादेव वर्णितोऽयं प्रसंगः कविना। अत एव आदिकविना अयोध्याकाण्डे सम्यग्वर्णनमविधाय सुन्दरकाण्डे अभिज्ञानप्रसंगे तत्कृतम्। तथा च रहस्यत्वेनैव गुप्तस्य अस्य वर्णनं कथमौचित्य-मर्यादामतिक्रामति? पादयोरेव चञ्चुप्रहारवर्णने कृते तस्य सर्वजनदृश्यतया कथमभिज्ञानचिन्हत्वं संभवेत्?! गोस्वामितुलसीदासपादास्तु लक्ष्मणवत्—

"नाहं जानामि केयूरे नाहं जानामि कुण्डले।
नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात्॥"

इति व्रतनिष्ठा यदि एतद्रहस्यं न वर्णयन्ति, तत्र तेषां न दोषः। अपि तु भूषणमेव तत्।

"सीता चरण चोंच हति भागा"।

इति तदीये पद्ये "चरण-चोंच" पदयोः समाहाराश्रयणेन रामायणोक्तेरेव आवेदितत्वस्यापि वक्तुं शक्यत्वाच्च। न तु महाकवेर्दूषणं तेन निर्वहति, भक्तानां विचित्रस्वभावत्वात्। अत एव वाल्मीकेरपि भक्तशिरोमणेः एतद्वर्णनमुपपद्यते। अस्य प्रसंगस्य उद्वेगजनकत्वे 'सुन्दरकाण्ड' मिति नामकरणं वाल्मीकेः सर्वथा अनुचितं स्याद् इत्यपि अवश्यं स्मर्तव्यम्। सुन्दर-काण्डे विहृत्येत्यादिपूर्वोक्तवाक्यदर्शनेन श्रीरामचन्द्रस्य धर्मदारसहितस्य ब्रह्मचर्य-व्रतपरिग्रहस्य वक्तुमशक्यतया ब्रह्मचारिणो भगवत उपभोगादिचिन्हादिवर्ण-नमनुचितमिति आक्षेपकाणां कथनमविचारितरमणीयमिति सिद्ध्यति।

यच्चोक्तं अनौचित्यप्रदर्शकोक्तीः आविष्कुर्वता केनचिद्महोदयेन—

"तं यथात्मसदृशं वरं वधूरन्वरज्यत वरस्तथैव ताम्।
सागरादनपगा हि जान्हवी सोपि तन्मुखरसैकवृत्तिभाक्॥

इत्यस्मिन् शंकरपार्वत्योरनुरागवर्णनपरे पद्ये दृष्टान्ततया जान्हवी-सादृश्योपादानं कृतं तत्र अनुचितार्थत्वं दृश्यते । तथाहि—सागरस्य सकल-नदीसम्बद्धस्य जान्हवीमुखरसैकवृत्तिमत्त्वं न संभवत्येव । पक्षान्तरे सागरस्य बहुपत्नीकत्ववद् महादेवस्यापि तथात्वमाविष्करोति इति ।

अत्र ब्रूमः—सागरस्य गंगानयनेनैव पूरणं रामायणादीतिहासप्रसिद्धम्। अतो "वृत्तिर्वर्तनजीवने" इति कोशानुसारेण गङ्गामुखरसैकजीवनत्वं नासम्भवयुक्तिकम् । पार्वत्याः स्वाधीनपतिकानायिकात्वं वर्णयितुकामेन महाकविना—

"यस्या रतिरसास्वादमुदितो दयितः सदा ।
सदैवास्ते तया साकमेषा स्वाधीनभर्तृका ॥"

इति भावप्रकाशनोक्तस्वाधीनभर्तृकालक्षणानुसारेण पार्वतीरतिरसास्वाद-मुदितस्य शंकरस्य तन्मुखरसैकवृत्तिमत्त्वं वर्ण्यते । तत्र बहुपत्नीकत्वस्य क्व प्रसक्तिः ? न हि स्वाधीनभर्तृकात्वं ससपत्नीकत्वव्याप्यम्, निःसपत्नीकाया अपि तस्याः संभवात् । निःसपत्नीकाया एव अस्वाधीनभर्तृकाया अपि संभवेन तथाविधत्ववर्णनमात्र एव तात्पर्यसंभवात् इति दोषैकदृशां तर्कोऽयं शिथिलमूलकः ।

मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे ।
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ।

इति वर्णनस्य काव्यप्रकाशकृता अङ्गीकृतत्वेन शंकरस्यापि नायिका-न्तरवर्णनस्य सिद्धत्वात्, आपाद्य व्यतिरेकनिर्णयो दुर्घट इत्यपि बोध्यम् । यदप्युक्तं तैरवं—

"ततः प्रियोपात्तरसेऽधरोष्ठे निवेश्य दध्मौ जलजं कुमारः" ।

इति रघुवंशपद्ये अजवर्णनपरे, विवाहात् त्रिरात्रं ब्रह्मचर्यस्य धर्म-शास्त्रोक्तत्वेन प्रियोपात्तरसाधरोष्ठत्वमजस्य न संभवति इति । तत्र वदामः—विवाहमङ्गलं हि बहुदिवसपर्यन्तं कन्यावेश्मन्येव निर्वर्तयितुमर्हति । न हि

अधुनातनो दरिद्र इव क्रथकैशिकानामधिपतिः एकरात्रं विवाहं कृतवानिति वक्तुं शक्यते । तथा च कामसूत्रे—

"कन्यावेश्मनि निर्वर्त्य राजवद्दशरात्रिक" मित्यादिना दशरात्रमहोत्सवः प्रतिपाद्यते । तदनन्तरं त्रिरात्रं निर्गतस्य वरस्य क्रथकैशिकेन्द्रेण अनुगमनमुक्त्वा चतुर्दशे दिवसे पूर्वोक्तं वर्णनं कृतमित्यायाति, तत्र का धर्मशास्त्रविरोधचर्चाऽपि ? ।

वस्तुतस्तु विवाहदिवसेष्वपि ताम्बूलादिग्रहणक्रीडायाः शिष्टाचारानुमतायाः "जनपदधर्मा ग्रामधर्माश्च ये तान् विवाहे प्रतीयात्" इत्याश्वलायनसूत्रानुसारेण "आवृतश्च स्त्रीभ्यः प्रतीयेरन्" इत्यापस्तम्बसूत्रानुसारेण च विवाहधर्माणां स्त्रीमात्रप्रमाणकानामपि अनुसारणीयत्वविधानदर्शनेन त्रिरात्रब्रह्मचर्यविधेः अष्टविधब्रह्मचर्येषु मुख्यब्रह्मचर्यमात्रपरत्वस्य वाच्यत्वात् प्रियोपात्तरसाधरोष्ठत्वं नानुपपन्नम् । तथा च कामसूत्रम्—"त्रिरात्रं हि स्तंभमिव अवचनं नायकं पश्यन्ती कन्या निर्विद्येत् परिभवेच्च तृतीयामिव प्रकृतिम्" इति । "उपक्रमेत विस्रंभयेच्च नत्वेव ब्रह्मचर्यमतिवर्तेत" इतिवात्स्यायनः ।

एवं सति सर्वविधे सांकुशत्वे महाकविः कालिदासो निरंकुश इति कथनं तथा "पुराणमित्येव न साधु सर्वं" मित्यादिवाक्यैकदेशावलंबनेन निरंकुशतोद्भावनमपि संपूर्णभागवतकथां श्रुत्वा पारदार्यमेव पुरुषाणां धर्म इति, एवं संपूर्णभारतकथां श्रुत्वा पंचभर्तृकत्वमेव स्त्रीणां धर्म इति च भ्रान्तस्त्रीपुरुषन्यायेन उपेक्ष्यमेव सहृदयानामिति सिद्धम् । तस्माद् भारतवर्षाभ्युदयसूर्यस्य उपलक्षणीभूतानां उषःकालवदतिपवित्रप्रतिभाराशीनां मूर्तिमतामिव पुण्यसंचयानां अनघानां प्राचां महाकवीनामुपरि दूषणोत्प्रेक्षणम् दिवान्धानामिव न युक्तमिति सिद्धम् ।

---

# महाकवेः कालिदासस्य कृतयः

ले. पं. सं सा. चन्द्रिका सौ. क्षमादेवीराव मुंबई

साम्प्रतं कालिदासकृतित्वेन व्यवहृता ग्रन्था एते—रघुवंशं, कुमारसम्भवं, मेघदूतमभिज्ञानशाकुन्तलं, विक्रमोर्वशीयं, मालविकाग्निमित्रं स्मृतिचन्द्रिका ज्योतिर्विदाभरण नलोदयमृतुसंहारं श्रुतबोधं कविकण्ठपाशं श्यामलादण्डकं नलहरिश्चन्द्रीयं वृत्तरत्नावली चेति । एतन्मध्ये रघुवंशं कुमारसंभवं मेघदूतमिति काव्यत्रयं शाकुन्तलं विक्रमोर्वशीयं मालविकाग्निमित्रमिति नाटकत्रयं च तेनैव महाकविना प्रणीतमिति अनतिसाधारणेन सार्वत्रिकयैव रीत्या उपलभ्यमानेन माधुर्येण रीतिविशेषेण च स्पष्टतरमवगम्यते । इतरे खलु ग्रन्था न तेन प्रणीता इत्यर्थमाधुर्यादिगुणाभावेन तत्पठनशीलैः सुकाममवबोधुं शक्यम् । तत्र प्रथमं कुमारसम्भवं समालोच्यते ।

एष खलु कविना प्रथमे वयसि प्रणीतः प्रथमो ग्रन्थः । काव्यमिदं शिवपार्वतीविवाहवर्णनात्मकम् । तत्रैवं विप्रतिपद्यन्ते । केचित्तु इदं सप्तदशसर्गावधि तारकासुरवधपर्यन्तं कालिदासेनैव प्रणीतम् इति मन्यन्ते । अपरे तु अष्टसर्गपर्यन्तमेव तेन कृतमिति । अत्र परामर्शे उत्तरपक्ष एव ज्यायान् । व्याख्यातृपुङ्गवेन मल्लिनाथेन अष्टसर्गावध्येव व्याख्यातम् । कौमुद्यां भट्टोजिदीक्षितेन

"शार्वरस्य तमसो निषिद्धये नूनमुन्नमति यज्वनां पतिः ।
पुण्डरीकमुखि ! पूर्वदिङ्मुखं केतकैरिव रजोभिरावृतम् ॥

इति कालिदास" इति कालिदासकृतत्वेन प्रदर्शितम । अन्यच्च नवमसर्गात् प्रभृति किल काव्यं न पूर्ववत् प्रशस्ततमम । कालिदासात् न्यूनेनैव च केनापि कविना कृतमिति शैलीविचारणेन सुकरमवगन्तुम् । अवलोक्यतामयं पञ्चदशे सर्गे श्लोकः ।

सङ्ग्रामं प्रलयाय सन्निपतितो वेलामतिक्रामतो
वृन्दारासुरसैन्यसागरयुगस्याशेषदिग्व्यापिनः ।

कालातिथ्यभुजो बभूव बहुलः कोलाहलः क्रोशनः
शैलोत्तालतटीविघट्टनपटुब्रह्माण्डकुक्षिम्भरः ॥

एवमनेका नीरसाः श्लोका विद्यन्ते । अस्मिन् खलु काव्ये रतिविलापः पार्वतीपरमेश्वरसंवादः तद्विवाहवर्णनं च सहृदयहृदयेषु नितरां प्रमोदमभिवर्षन्ति ।

अथ मेघदूतं विभागद्वयघटितमिदमतिसुन्दरम् । रसस्तु शृंगारः । रचना तु मन्दाक्रान्ताघटिता नितान्तमानन्दमुत्पादयति । सुस्थानकल्पितयतिविन्यासैः परस्परं मैत्रीमुपगतैरिव वर्णैः समुचितनिर्भररनम्र इव मन्दं मन्दं नुदति प्रत्येकं श्लोकः ।

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्
वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।
गर्भाधानक्षणपरिचयाद् नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥

इतिश्लोकेन काव्यगुणान् कविः स्वयमेव प्रकटयति । यथा मन्दं मन्दं नुदतीत्यनेन मृदुवर्णानां प्राशस्त्यं, अनुकूलमित्यनेन पदानां मैत्रभावं, नुदतीत्यनेन ध्वनियुक्तत्वं, मधुरमित्यनेन द्राक्षापाकत्वं, सगन्ध इत्यनेन आल्हादकतां, नयन, सुभगमित्यनेन मनोमोहनत्वं प्रतिपाद्यार्थस्य पुरो वर्तितम् । एतेन काव्यस्य सर्वेन्द्रियाल्हादकत्वं प्रथमं लक्षणमिति प्रकारान्तरेण प्रपञ्चयति सकौशलमेव कविप्रवरः ।

रघुवंशकाव्येऽस्मिन् खलु भूयिष्ठानि रसवन्ति नीतिप्रतिपादकानि धर्मबोधकानि वस्तुस्वभाववर्णनानि च समाकर्षन्ति निभृततरमखिलविबुधचेतांसि । कविरप्यत्र पूर्वकृतैर्ग्रन्थैरस्ताम्भितशब्दतृष्णः अर्थप्राधान्यसमासक्तचित्तः कारिष्यमाणस्य काव्यस्य तादृशं गौरवमुद्भावयन् आदौ मङ्गलश्लोकेन

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

इत्यनेन समप्राधान्येऽपि शब्दार्थयोः अर्थस्य परमेश्वरदृष्टान्तवर्णनेन शब्दस्य स्त्रीदृष्टान्तवर्णनेन अर्थमेव प्रधानतरं मन्यते इति सुस्पष्टं दृश्यतां

विबुधैः। साकेतनगरवर्णनमिन्दुमतीवियोगावसरे राजविलापवर्णनमिति तरामास्वाद्यम्।

अतः परं शाकुन्तलादिनाटकानि समालोचयामः। शाकुन्तलं सर्वेषां नाटकानामुपरि वर्तते इति न वो न विदितम्।

भाषाणां संस्कृता भाषा कथ्यते प्रथमा बुधैः।
कालिदासो महाकीर्तिस्तत्कवीनां पुरस्सरः॥
तत्प्रणीतेषु काव्येषु श्रेष्ठं शाकुन्तलं विदुः।
तत्रापि च चतुर्थोऽङ्कः तत्र श्लोकचतुष्टयम्॥
यास्यत्यद्येति तत्रापि श्लोकः सर्वमनोहरः।

कविः शाकुन्तले प्राचीनैर्बहुधा उपलक्षितानि नाटकलक्षणानि प्रायशः अनादृत्य यथेष्टं रसोत्पादकमेव पन्थानमाश्रयति। कथासन्दर्भश्च नितरां रमणीयः। दुर्वासःशापदानवृत्तान्तः, इन्द्रेण दुष्यन्तस्याह्वानमित्यादिसन्दर्भाः श्लाघनीयाः सर्वेषाम् अपि हृदयमाकर्षयन्ति। नीचप्रभृतिसर्वोत्कृष्टपात्रान्तं तत्तद्योग्याचारभाषाप्रकटनेन कौशलमपूर्वं प्रदर्शितम्। शृंगाररसवर्णने खलु अप्रतिभटः कालिदासः। वीररसं तु नैवं वर्णमितुमलम्। अत्र भवभूतिर्विशिष्यते। सर्वत्र खलु कालिदासः कोकिलमंजुभाषणमेवाभिप्रैति। नतु शिवाघोरस्वनम्। अस्मिन्नाटके न कुत्रापि विरसो व्यर्थो वा संल्लापः। मितं मधुरं च भाषणम्। प्रतिपात्रमाधीयते यत्नः। सर्वत्रापि अन्यूनरसमाधुर्यमानन्दयति नायिकाशरीरमिव कथाशरीरं सहृदयचेतांसि। एष किल ग्रन्थः पुनः पुनरपि पठ्यमानः "सलिलनिधिरिव प्रतिक्षणं मे भवति स एव नवो नवोऽयमक्ष्णोः। इत्युक्तप्रकारं नवनवः प्रतिभाति। सर्वथा सर्वविषयकुलंकषा मतिरस्य महानुभावस्य। कथं वा शक्यते नाटकस्यास्य महिमानमपरिमेयं वर्णयितुम्। स्वयमेव पठित्वा सकृदपि सहृदयाः काममवधारयेयुः। साधूक्तं भट्टबाणेन यथा

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते॥ इति।

सर्वेष्वपि प्रायशो वृत्तेषु तस्य विद्यन्ते श्लोकाः। किन्तु आर्यारचनायां न कोपि प्राचीनो नवीनो वा कविः कालिदासादतिरिच्यते। न भवभूतिरपि तथा आर्यां विधातुमलम्। यथा—

कास्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥

उपमालङ्कारप्रयोगे च कालिदासो नितरां विशिष्यते । अत्र च बहून्युदाहरणानि । दिङ्मात्रं यथा

इदमुपनतमेवं रूपमक्लिष्टकान्ति प्रथमपरिगृहीतं स्यान्नवेति व्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं न तु खलु परिभोक्तुं नैव शक्नोमि हातुम् ।

सर्वथा यद् यद् लोके रमणीयं तत्तत्सर्वं कालिदासवचस्सु इति उपसंन्ह्रियते ।

कालिदासगिरां सारं कालिदासः सरस्वती ।
चतुर्भुजोऽथवा साक्षाद् विदुर्नान्ये तु मादृशाः ॥ इति.

प्रोक्तं खलु एतद् महामहोपाध्यायेन कोलाचलमल्लिनाथेन । किंच रामायणमसकृत् पठित्वा तद्गतं सारांशं अवगम्य आदिकविवद् वचनोल्लासं विहितवान् इति स्पष्टमुपलभ्यते । अयमप्यपरः आदिकविरिति सम्माननीयो महानुभावः समस्तैः लोकैः । महाकाव्यकरणेनैव यद्यपि महाकविरिति नाम संभवति, तथापि अप्राकृतगुणसम्पन्नोऽयमन्वर्थमेव धारयत्युपाधिम् । एष किल परमेश्वरभक्तः शैव इति तत्तत्काव्यगतैः श्लोकैः सुस्पष्टमवगम्यते । 'जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ' 'या सृष्टिः स्रष्टुराद्या' 'वेदान्तेषु यमाहुरेकविषयम्' इत्यादिना.

कविरयमविकत्थनो महानुभावः । अन्ये कवय इव न गुणानात्मनः स्वयमेव श्लाघते । भवभूतिप्रभृतयः प्रस्तावनायाम् स्वयमेवात्मगुणान् प्रकटीकुर्वन्ति । किन्तु कालिदासः 'आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्' । 'सन्तः परीक्ष्यान्यतरद् भजन्ते' इति सतामेवाशयं बहु मन्यते । परिहरति च स्वीयमहंकारम् । 'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः' । 'मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ' । इति ।

सर्वत्रापि, महाकविरयं वैदर्भीरीतिमेवावलम्बते । 'अनाघ्रातं पुष्पं किसलयमलूनं कररुहैः' इत्यादिना । द्राक्षापाको रचनासु दृश्यते । यथा-सरसिज-

मनुविद्धं शैवलेनापि रम्यमित्यादिषु । वृत्तिश्च कौशिकी, यथा 'सुभगसलिला-वगाहाः' इत्यादौ । महाकविरयं वश्यवागेव न पुनर्हठादाकृष्टानां पदानां रचयिता । अपरिमिता हि गुणा महाकवेरस्य कृतिषु न लघीयस्यास्मिन् लेखे वर्णयितुमलमिति शिवम्.

---

# सरलहृदया सरला.

अस्ति किल सह्याद्रेरधस्ताद् आसमुद्रं विविधमहीरुहसुन्दरः अविरल-कान्ताररपरिशोभितः कर्नाटककीर्तिकामिनीकमनीयभूषणभूतः कारवारप्रान्त-परिगण्यमानो रमणीयतरः प्रदेशः । यं प्रदेशमवलोक्य प्रथमे वयसि वर्तमानः खण्डत्रयपंडितमण्डलीमण्डनायमानो वङ्गीयसाहित्यसम्राट् कवीन्द्रः सुगृहीत-नामा रवीन्द्रमहाशयः प्रतिभोद्भासिता अनेकाः कविता व्यरचयदिति श्रूयते । तत्र च प्रदेशे प्रामुख्येन परिगण्यमानं कारवारं नाम नगरम । तस्मिंश्च कोपि विनायकरायो नाम महाभागः प्राड्विवाको वरिष्ठाधिकारी दारापत्यपरिवृतो निवसति स्म । एकदा अमावास्यायां निशि प्रथमप्रहरावसाने विनायकराय-कुमारी कुमुद्वतीनाम्नी सहसा हाहा मृतास्मि यः कोपि वा त्वरया अभ्येत्य त्रायतां त्रायतां माम् इति आर्ता सभयमाचक्रन्द । गृहान्तवर्तिनो लोकाः सर्वेपि भोजनार्थमुपविष्टा न आकर्णयन्नाक्रन्दनम् । समयेऽस्मिन् प्रातिवेशिकः श्रीमान् नवयुवा सुधांशुकुमारः सहसा धावन् करकलितदीपवर्ति (ब्याटरी) निष्पीडनेन तस्याः सविधे समुज्वलं प्रकाशमुदपादयत् । तावद-भिनवयौव्वनोद्भासिनी कुमुद्वती मोहमुपगता निश्चेष्टा समीपवर्ति-तरुमाशिश्रिये.

साहसी सुधांशुकुमारोपि सधैर्यं कुमुद्वत्याः पादमाजानुरज्जुदीर्घेणात्म-भोगेन बन्धनोद्यतं कृष्णसर्पं पुच्छे गृहीत्वा भ्रामयन् वेगेन विहायसपथेन

सुदूरमक्षिपत्। सवेगभ्रामणेन दूरतः पातनेन च निरुद्धश्वासो गतासुरपतत्सर्पः। ततश्च यावदसौ कुमुद्वतीमुदूह्य गृहान्तरानयत्। तावदेव सर्वे समापिताभ्यवहाराः किमेतत् संजातमिति समुपजातविस्मयाः सुधांशुकुमारमपृच्छन तथा विविधैः शीतलैरुपचारैर्मोहमपनेतुमुपाचरंश्च। 'अयि भोः प्रथममिमां त्वरया राजकीयमहारुग्णालयं प्रापयत, तत्रत्यो विद्वद्वरः पाश्चिमात्यपद्धत्या वैद्यविद्यापारंगतो द्राक्तरश्चिकित्सां करोतु, महता उल्बणविषेण कृष्णसर्पेण दष्टा इयमिति निरूप्य 'हा हा मृतास्मि' स्याक्रन्दनश्रवणं, ततः स्वागमनं घोरसर्पदर्शनम् ततश्च तन्मारणं ततस्तदंतरानयनं इत्यादिसर्वमावेदयत्सुधांशुः। कुमुद्वतीभ्राता मोहनराय सुधांशुमित्रं त्वरया अश्वशकटमानीय मूर्च्छितां तामारोप्य रुग्णचिकित्सालयमगच्छत् सह सुधांशुना। पिता माता अन्ये सर्वेपि बान्धवा भीतित्रस्ता दुःखाकुलाः रुग्णचिकित्सालयं प्राविशन् चिंताकुलाः। विषदोषापनयनचतुरो वैद्यवरोपि विविधान्यौषधानि पाययन् शस्त्रविशेषेण निष्कासयन् विषपरिमाणून् सूचीमुखेन वीर्यवत्तरमौषधं रक्तनलिकासु सूचीमुखेन (इंजेक्शन) संचारयन् अचिरादेव तां विषदोषरहितामारोग्यवतीमकरोत्। अभाषत च वैद्यवरो विनायकरायमहोदयं 'यदि समये नागमिष्यद् युवा सुधांशुरचिरादियं कुमुद्वती मृता एवाभविष्यदिति। सोच्छ्वासा च कुमुद्वती सुधांशुवदनं विद्युद्दीपप्रकाशे सुचिरमनिमिषाभ्यां विशालाभ्यां लोचनाभ्यामवलोकयन्ती कृतज्ञतां प्रदर्शयन्ती अशब्दमेवायच्छद् धन्यवादान्। सपत्नीको विनायकरायः अविरलमश्रुजालमभिवर्षन् महतो भवत्कृतस्यास्य उपकारस्य केन पथा उपकर्तव्यमिति न जाने। सर्वथा भवतु भवान् चिरायुरैश्वर्यसमृद्धो भाग्यवानित्याशीस्ततिभिरभिनन्दामीति आह।

ततः प्रभृति मोहनो मुहुर्मुहुरात्ममित्रं सुधांशुमामंत्रयन् विविधैरतिमिष्टैर्मधुरमधुरैरभ्यवहार्यैर्भोजयन् तैस्तैः कथालापैराभाषयन् स्नेहमवर्धयत्। कुमुद्वती च सुधांशुना सह सहजामपि लज्जामपहाय संभाषयन्ती सरससरसैरालापैरानन्दयन्ती अतिमनोहरैरपांगावलोकनैरमन्दानन्दनिदानैर्मन्दहासैरभ्य-

पहार्यवस्तुप्रदानव्याजेन कृतैर्हस्तस्पर्शैरनालोकितघटितैरिव बुद्धिपूर्वं घटितैरंग-संघट्टनैस्तत्प्रसंगे चातिहसितैस्तथा तैस्तैरन्यैरपि कारणांतरैरानन्दयदति तराम्। स्वयममन्दानन्दतुन्दिला च समभवत्। ततश्च महाविद्यालये अध्येतुकामश्च सुधांशुरनुमोदितः पित्रा मुम्बापुरीमागच्छत्। गमनाभ्यनुज्ञासंपादनाय विनायकरायगृहं गतः सुधांशुरनुमोदितः सर्वैश्चिरायावालोकयत् कुमुद्वतीम्। अश्रुजलपूर्णया दृशा निरीक्षमाणा अनक्षरमेव भृशदुःखाकुला सा अभ्यनुज्ञातवती। कुमुद्वतीमाता सुधांशुं मन्मथाकारमवलोक्य मुंबापुरीप्रयाणावसरे तमुक्तवती किल यद्भवानचिरादेव महाविद्यालयतो लब्धोच्चपदवीकः कुमुद्वतींपरिणयतु इति.। अन्वमोदतेदं भाषणं विनायकरायमहोदयोपि । अवश्यमेवंभवितव्यमेवेति मोहनोप्यवादीत्। सोल्लासमहसच्च तदानीं कुमुद्वती। बलादेव कुमुद्वतीवदनादावर्त्य चक्षुरात्मन आगारमागत्य गृहीतवस्तुजातो निरगात् सुधांशुः।

एवं च गच्छति काले प्रतिवत्सरं परीक्षासु प्रथमश्रेणीमाश्रयन् सुधांशुरखिलेषु विद्यार्थिषु प्रीतिमुपार्जयन् बी. ए. कक्षायामध्येतिस्म । तत्र विद्यालये मुख्याध्यापकः कोपि विलायतप्रवासमात्रात्प्राप्तोच्चपदोऽनवगतविषयमध्यापयन्नेकदा पृच्छ्यमानः सुधांशोरुत्तरं दातुमक्षमः विद्यार्थिसमक्षमित्थं प्रश्नकरणादात्मानमवमानितं मन्यमानः क्रोधवशो मा भवान् पृच्छतु सविशेषं इति रहस्यवादीत्। प्रधानाध्यापकः सन् पृष्टो यदि नोत्तरं दातुं समर्थस्तर्हि पदादस्मान्निवर्ततां भवान्, अन्यः समर्थोऽध्यापको नियुज्येत विद्यालये, तेन विद्यार्थिनः परीक्षासु भवेयुरुत्तीर्णाः। यदि भवादृशः उत्तरदानासमर्थः प्रधानाध्यापक चेत् को वा उपयोगः स्याद्विद्यार्थिनामिति स्पष्टमेव निष्ठुरतरमभिहितवान् । एवमुभयोर्विरोधे वर्धमाने सुधांशुरपरस्मिन् सुप्रसिद्धे महाविद्यालये अध्येतुकामस्तं पूर्वविद्यालयमत्यजत्च एतस्मिन्नेव समये सुधांशुजनको जानकीनाथरायो नाम सुप्रसिद्धो वाकीलव्यवसायसम्पादितभूरिधनो वरिष्ठन्यायासने कार्यनिमित्तमुपागतः प्रधानाध्यापकेन समं विरोधमाचरन्तं सुधांशुमसहमानो रोषाकुलितमानसः प्रधानाध्यापकसविधे क्षमामभ्यर्थय इति साग्रहमावेदयामास। नाहं क्षमामभ्यर्थयामीति

सुधांशुरपि स्वाभिमानेन पितुराज्ञां न पर्यपालयत् । स्वाज्ञाभंगकुपितो जानकी-रायोप्याग्रहस्वभावः प्रतिमासं अशनवसननिवासाद्यर्थे दीयमानं धनं न प्रेषयामी-त्याह । यदि भवान्न प्रेषयेत्तर्हि कथमपि वा सम्पाद्य व्ययभारमहमेव वक्ष्या-मीति सुधांशुरुत्तरयांचक्रे । यथोक्तमनुतिष्ठन् जानकीनाथरायो धनं न प्राहिणोत् ।

समयेस्मिन् सुधांशुरपि धीरो मोहमय्यामेव सुप्रसिद्धस्य वाक्कीलव्यव-साये लब्धकीर्तेः कारवारमण्डले लब्धजन्मनो दिनकररायमहोदयस्य सविध-मुपेत्य प्रार्थयामास यद् अहं विद्यार्थी बी. ए. कक्षायामधीती भवतां सविधे-प्रत्यहं प्रातः षष्ठघंटावादनसमये अभ्येत्य अष्टमघण्टावादनं यावत् लेखनादि-कर्म करोमि तदर्थे मह्यमावश्यकं तावद् धनं वितरंतु श्रीमन्त इति । स दिनकररायो महोदारो गिरमुपनिशम्य बाढमागच्छतु भवान् पर्याप्तं ते प्रयच्छा-मीत्याश्वासयच्च । एवं धनमुपार्जयन् सुधांशुरभ्यसन् बी. ए. परीक्षायां सर्वोच्चतया प्रथमकक्षायामुत्तीर्णो नैकान् परितोषिकान् समपादयत् । ततश्च एल. एल. बी. परीक्षायामपि क्रमेण यशस्वी बभूव । प्रसंगेस्मिन् दौर्भाग्य-वशात् अभ्यासविशेषाच्च तस्य विशाले नयने रुजाक्रान्ते अचिरादेव आन्ध्यमुपगते अभूताम् । इदमवलोक्य दयालुर्दिनकररायस्सुधांशुं समाश्वास्य नेत्रचिकित्सालये समदर्शयत् । तत्रत्यो विद्वान् वैद्यवरः शस्त्रेण प्रेक्षणकर्मणि अन्तरायभूतं दोषमपामार्जयत् । तदानीं मासाधिकः कालस्तेन चिकित्सालये अतिवाहनीय आसीत् । तदवसरे श्रीमान् दिनकररायस्तस्य अहर्निशं सेवार्थे विद्याविनयशालिनीं सरलहृदयामुदारशीला सरलामात्मनन्दिनीं नियोजयामास । पट्टबद्धलोचनयुगलः सुधांशुरव्याजमनोहरया सरलया संसेव्यमानस्तामनव-लोकयन् ध्वनिसादृश्येन कुमुद्वतीमूहमानः कथं कुतो वा इयमत्रेति विस्मय-मानस्तस्या अत्रागमनहेतुमपश्यन् वैद्यवरानुज्ञया विशेषविचारमकुर्वन् तस्याः सान्निध्येन सेवया च सुखमतिशयमन्वभवत् ।

अत्रांतरे कारवारनिवासी विनायकरायः कुमुद्वतीहृदयानुरोधेन जानकी

नाथरायरोषपात्रतया क्लेशायासभाजनं सुधांशुं वरमनर्हं मन्यमानो यूने यामिनीभूषणनाम्ने एम्. बी. बी. एस्. परीक्षोत्तीर्णाय कुमुद्वतीं दत्वा विवाहमहोत्सवमकारयत् । नैतदजानात्सुधांशुः ।

एकदा नेत्रवैद्यवरः सुधांशोर्लोचनयुगलं पट्टबद्धममोचयत् । नयनयुगलं दोषलेशेनापि विधुरमतितरां नीरुजमित्याकलय्य गृहगमनमभ्यजानात् । लब्धदृष्टिः प्रथममेव सरलायाः सरसायाः सर्वांगरुचिरायाः मनोहराकारायाः सन्दर्शनेन सुखमनुभवन् अपि नेयमस्माकीना कुमुद्वती किन्तु अपरा वनितेति यावद् विचारयति तावदकस्मादेव दयितेन यामिनीभूषणेन समं भाषमाणा कुमुद्वती केनापि कारणान्तरेण तमेव चिकित्सालयं तत्रापि सुधांशुवासं सदनमुपागच्छत् । सुधांशुमवलोक्यापि अभाषमाणा सा मदालसगतिरपहसन्ती प्राङ् मे पित्रा दित्सिताहमस्मै परं पितृरोषास्पदतया दरिद्र इति नाहमेनं परिणेतुमैच्छमिति 'पत्युः कथयन्ती यथा सुधांशुश्रवणगोचराण्यक्षराणि भवेयुस्तथा उच्चरन्ती यामिनीभूषणेन सममन्यत्रागच्छत् । उष्णायसरसमयानीवाक्षराणि कर्णे गृण्हन् सुधांशुरस्याः कठोरं हृदयमभिज्ञातवान् ।

सरलहृदया सरला कुमुद्वत्या अपेक्षया बहुभिरपि गुणैरन्विता सुधांशुहृदयानन्ददायिनी एवासीत् । परं नेत्रबन्धावसरे ध्वनिसादृश्येन कुमुद्वतीमूहमानस्सरलामेकदा अये हृदयानन्ददायिनि कुमुद्वति कुतोत्र भवतीत्यपृच्छत् । सा नाहं कुमुद्वती किन्तु सरलेति प्रत्यब्रवीत् । दिनकररायगृहे लेखनकर्मणि नियुक्तोप्ययं नैकदापि गृहांतरगच्छत् अतो न दृष्टवान् प्रथमं सरलाम् । तेन अपरिचिता कापीयं चिकित्सालये वर्तमाना शुश्रूषार्थं नियोजिता स्याद्वनितेतिताममन्यत । यदा च दिनकररायेण स्वगृहमुपानीतो वेषभूषादिकारणेनापि सरलामवलोकयन् नेयं चिकित्सालयनियुक्ता या काचन दासी किन्तु महात्मनोऽव्याजोपकारिणो दिनकररायस्यैव नन्दिनी स्वमनोनयनानन्ददायिनीत्यवागच्छत् ।

ततश्चैकस्मिन् दिवसे दिनकररायः सुमुहूर्ते जानकीनाथरायं प्रशान्तरोषं सपरिवारमानाय्य सरलया सह सुधांशोर्विवाहमंगलमहोत्सवमकारयत् ।

सुधांशुरप्यचिरादेव मोहमय्यां वरिष्ठन्यायालये वाकीलव्यवसाये लब्धकीर्ति र्वरिष्ठन्यायाधीशकृपाभाजनं न्यायासनाध्यक्षपदमेवाभजत् । मेधाविमूर्धन्यस्य अर्हत्तमे पदे नियोजनमभ्यनन्दन् सर्वेपि । एकदा निशायां रहोमन्दिरे अशिथिलमालिंगिता सरला सुधांशुमसकृदधरामृतास्वादनोद्यतमब्रवीत् प्रिय-वल्लभ नाहं कुमुद्वती किन्तु सरलास्मीति । अयि सरलहृदये सरले समयेस्मि-न्नानन्दमये सर्वथा न स्मरणीया सा निष्ठुरहृदया कृतघ्ना मदोन्मत्ता गुणज्ञा-नशून्या मूर्खा इति । क सा काचरूपा क्व भवती अनर्घ्यरत्नसदृशीति भाषमाणो मुहुर्मुहुश्चुम्बन् सरलया सह अतिचिरं सुखमुवास ।

संपादकः

---

# ईशोपनिषत्सारः ।

( श्रीहुकोरिश्यामशर्मा सङ्ग्राहकः एम्. ए. ।)

ईशोपनिषद्गूढार्थो विद्याऽविद्यासम्भूत्यसम्भूतीति चतुःशब्दार्थानेवावलम्बत इति सुप्रसिद्धम् । एतान् शब्दानवगन्तुमेवादावत्र ऋजुः प्रयत्नः क्रियते । विविधमतनिष्ठा अर्था अप्यत्र संगृहीताः सत्यान्वेषणं सुकरं भवेदिति ।

प्रथमं तावदुपनिषदारम्भ एव ' तेन त्यक्तेन भुञ्जीथाः ' ' कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ' इति वाक्यद्वयेन प्रवृत्तिपरोऽर्थः सुस्पष्टं प्रति-पादित इति भाति । तदनन्तरं विद्याऽविद्यासम्भूत्यसम्भूतिनामकानि चत्वार्यपि साधनानि मृत्युतरणार्थममृताशनार्थं चावश्यकानीति श्लोकषट्केन ( ९–१४ ) विशदीक्रियते । विद्या चाविद्या च सम्भूतिश्चासम्भूतिश्च विरुद्धार्थप्रतिपादके शब्दयुगले इति ज्ञातुं संस्कृतस्य विशेषज्ञानं नावश्यकम् । अविद्योपासनस्य तथैवासम्भूत्युपासनस्य फलमन्धतमःप्रवेश इति स्पष्टमुपात्तम् । किन्तु विद्या-

सम्भूत्युपासनस्य फलमधिकतरं तम इति कथितम् । अत्र तु शब्दप्रयोगः "ततो भूय इव ते तमः" इत्यस्ति । इवशब्दोपयोगेन विद्यासम्भूत्युपासनं प्रायो विशेषफलदायीति मतं विशेषतः खण्ड्यते इति तर्कः प्रसरति । विद्यासम्भूतिशब्दयोः प्रसिद्धार्थौ अग्राह्यौ इति यावन्न दर्श्येते तावदप्रसिद्धार्थग्रहणमयुक्तमेव भवेत् । अभिधायाः सम्भवे सति व्यञ्जनापरिग्रहस्यानुपपत्तेः । विद्या नाम ज्ञानमविद्या नाम ज्ञानाभावः केवलं कर्मेति प्रसिद्धार्थः । तथैव सम्भूतिर्नाम सम्भवः, स नाम इह जगति जन्म । असम्भूतिर्नाम विनाशः, स नाम जन्मबन्धविनाश इत्यादि प्रसिद्धार्थः । एते प्रसिद्धार्थो युक्ता एवेति मन्ये । मोक्षप्राप्त्यर्थं ज्ञानकर्मसमुच्चय आवश्यकः । तथैव कर्माचरणार्थं जन्म, अमृतोपयोगार्थं जन्मबन्धविनाशश्चावश्यकौ । कर्माचरणमेव किमर्थमावश्यकमिति प्रश्ने सञ्जाते कुर्वन्नेवेति प्रथममेव दृष्टः प्रवृत्तिपरोऽर्थ उपनिषत्सम्मत इत्युत्तरं दातव्यम् । अत्र ज्ञानशब्देन आत्मस्वरूपज्ञानं परिगृह्यत इत्युपनिषद्गतेनात्मस्वरूपवर्णनेनैव ज्ञायते । कर्माणि न केवल शास्त्रविहितानि कमाणि, किन्तु जीवनावश्यकानि सर्वाणि कर्माणीति जिजीविषेदिति शब्देनानुमीयते । अन्यत्र दर्शिता विविधमतानुकूला अर्थाः कारणं विनाऽभिधात्यागं कुर्वन्तीति न बहु मन्तव्याः ।

अस्यामुपनिषदि वेदान्ततत्त्वज्ञानमाचरणमार्गश्च संक्षेपतोऽपि सुस्पष्टं कथितौ । एतदर्थमेव रवीन्द्रनाथारविन्दघोषाद्याधुनिकतत्त्ववेत्तार एतां बहु प्रशंसन्ति, स्वमतस्याधारभूतां मन्यन्ते । तत्र तत्त्वज्ञानं मुख्यतो "यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः । तत्र को मोहः कः शोकः एकत्वमनुपश्यतः ॥" इति श्लोकेन निर्दिश्यते । एवं सर्वभूतात्मभूतात्मत्वं परं ज्ञानमिति विधाय "कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः" 'तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यचिद्धनम्" इति वाक्यद्वयेनाचरणमार्गः स्फुटीकृतः । स्वकर्तव्याचरणं त्यागपरभोगश्च शुद्धाचरणस्य बीजे । एवं सति कर्मलेपभवनेन संसाराविमोक्षप्रसङ्गः समुत्पद्येतेति शङ्कायाः समाधानम् "एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे" इति श्लोकार्धेनोच्यते । आत्मज्ञानदीप्तं कर्म बन्धनकारकं न भवति, मोक्षप्राप्तेश्च एष एवैको मार्ग इति भावः ।

---

## विविधमतगृहीता अर्थाः

| शब्दः | शाङ्करमते | रामानुजमते | माध्वमते | दयानन्दमते |
|---|---|---|---|---|
| (१) विद्या | देवताज्ञानम् | कर्मरहितब्रह्मज्ञानम् | यथावत्परमात्मज्ञानम् | ज्ञानकाण्डम् |
| (२) अविद्या | कर्म | केवलं कर्म | अन्यथाज्ञानं तस्य निंदा च | कर्मकाण्डम् |
| (३) सम्भूतिः | कार्यब्रह्म हिरण्यगर्भाख्यम् | समाधिरूपा अनुभूतिः | सृष्टिकर्तृत्वं हरेः | (१) कार्यरूपं जगत् (२) उत्पन्नं शरीरम् ( चतुर्दशश्लोके ) |
| (४) असम्भूतिः | अव्याकृताख्या प्रकृतिः चतुर्दशश्लोके सम्भूतिः=असम्भूतिः । विनाशः= हिरण्यगर्भः | समाध्यङ्गभूता निषिद्धनिवृत्तिः । | हरिः सृष्टेरकर्तेति ज्ञानम् विनाशः=संहृतिज्ञानम् । | कारणरूपा प्रकृतिः । विनाशः=कार्यजगतः विनाशः । |

# निसर्गकविः कालिदासः

## The Poet of Nature

ले. गलगली पंढरीनाथाचार्यः सहसंपादकः

It was here at last that the Indian genius found the law of moderation in Poetry which it hardly knew elsewhere, and thus produced works of enduring beauty. MACDONELL.

महाकविना कालिदासेन क्वचिदपि स्वकृतिषु प्रयत्नाद्वा प्रमादाद्वा ग्रन्थग्रन्थिर्नैव न्यासि । न वाऽप्रतिमस्वप्रतिभापाण्डित्यप्रदर्शनार्थं प्रत्यक्षरश्लेषोन्मेषो व्यतानि । नापि यमकचित्रबन्धादिकृत्रिमोपायशतैस्सहृदयवृन्दशिरस्समान्दोलनार्थं वृथा क्लाप्यायासित आत्मा नचापि प्रासानुप्रासाद्यनुस्यूतापातरमणीयपदबन्धैर्वाचकमनःप्रतारणार्थमकारि लेशोपि प्रयत्नः । अथापि निराभरणसुन्दरीवादसीयकविताकामिनी संमदयत्येव सहृदयहृदयानि । आघूर्णयत्येव रसिकशिरांसि । स्यन्दयत्येव पाषाणादपि पीयूषम् । प्रसादयत्येव च परीक्षकचेतांसि । अत्रैव प्रस्फुरति कालिदासीयमितरासाधारणं वैशिष्ट्यम् यदेतदीयान्येतानि काव्यानि विनापि शब्दाडम्बरम् अन्तरा च यमकश्लेषादिकृत्रिमबन्धनं अपहायापि कृतकचमत्कारजनकचित्रबन्धादिप्रपञ्चनं आवर्जयान्ति रसिकमनांसि, आन्दोलयन्ति समालोचकशीर्षकाणि, आल्हादयान्ति च, सहृदयहृदयानि ।

एतादृशं सहजसुन्दरमव्याजमनोहरं निसर्गमधुरं स्वभावसरसं सरलरमणीयं—सहृदयहृदयंगमंच साहित्यं वैरल्येनैव समुपलभ्यते जागतिकसारस्वतप्रपञ्चे । भारतीयवाङ्मयभाण्डागारे तु अन्विष्यापि नैवोपलब्धुं शक्यते तादृक्षम् अन्यादृशस्वारस्यसाहित्यविलसत्साहित्यामित्यभिप्रैति मेकडोनॉल्डमहाशयः which it herdly knew elsewhere इत्यनेन

History of sanskrit literature नामक ग्रंथे । अत एतर्हि तदीय-कविताकलाकौशलीं पूर्वपाश्चिमीया विपश्चिदपश्चिमाः विमर्शकधौरेयाः साहित्य-भट्टाश्च स्वस्वाभिमानं मुक्तकण्ठंच प्राशंसन् प्रशंसन्ति, प्रशंसिष्यन्ति चाकल्पम् । महीयानेव हि भेदः अन्यादृशमेव च वैलक्षण्यं कालिदासीय-कवितासु. इतरकविकाव्यतः । माघश्रीहर्षभवभूतिबाणादिकविप्रकाण्डानां काव्यानि प्रदीर्घसमासकठिणार्थवैयाकारिणिकापवादिकप्रयोगशब्दचातुर्यादिभिः चमत्कुर्वन्ति अपि मेधाविमूर्धमणीनां मानसानि आघूर्णयन्त्यपि सुधीशेखरशिरांसि न तेषु सहृदयसामान्यानां हृदयकमलविकासनक्षमता विद्यते । मानवीयमेधातन्तुषु सवेगसंमथनकोलाहलमेव समुद्भावयन्तीतरकविकाव्यानि । परन्तु कालिदासीयानि पद्यानि तु आलोकितमात्राण्येव तूलिकयेव एकैकदलं समुन्मीलयन्ति हृदयकमलानि । इतरेषां काव्यलीलाक्षेत्रं बुद्धिश्चेत् अदसीय कवितावि लासस्थानं रसिकान्तःकरणमेव । हृदयविनिर्गत एव काव्ये भावनाप्राधान्यसद्भावाद् यथार्थकाव्यत्वम् । मस्तिष्कनिर्मन्थनन्बुद्धिनिष्पीडनजनितकाव्येषु काव्यापेक्षया शास्त्रलक्षणमेव विशेषतस्समन्वेति । नैषधादिकाव्यान्येवेतादृशकाव्य—शास्त्राणि तत्र च सहृदयानां झटित्यर्थानवबोधाद् अन्हाय च भावाग्रहणाद् भवत्येव काव्यास्वादनकाले रसभङ्गः । आलोकनकाले आस्वादनसमये च तेषां भावावबोधनार्थं बुद्धावेव व्यापारस्य प्रचाल्यमानत्वाद् अन्तरान्तरां खण्डितत्वेन च कस्याश्चिदपि भावनाया अप्रचोदितत्वाद् न कीदृग्विधोपि रसपाकः सम्यक्सिध्यति इत्येतत्तु सहृदयहृदयसाक्षिकमेव तत्वं कालिदासीयकाव्यानांतु समवलोकनकाल एव विस्पष्टमवबुध्यमानत्वात्प्रतिबन्धकाभावात्सद्य एव घटते रससाक्षात्कारः । कालिदासो रसासिद्धः कश्चित्कविः । आङ्गलसाहित्येऽपि षेक्स्पीयरषेलीवर्ड्स्वर्थप्रभृतयः विरलविरला एव हि कविप्रवराः तमेनं तुलयितुमलंभवन्ति । श्रीहर्ष—बाणभवभूत्यादीनां भारतीयकविमालिकायामुच्चस्थानसत्वेपि जागतिककविरत्नहारे न तेषामुन्नतस्थानं दीयते । कालिदासस्य प्रापञ्चिकमहाकविमणिमालायां नः केवलं यत्किञ्चित्स्थानं परमतरलं तरलस्थानमेव दृढं वर्तते । विदेशेषु निसर्गकवीनां

सविशेषं गौरवं, समधिका मर्यादा, सातिशयंच संमाननं, विद्यते। एतादृशं निसर्गकवित्वं ( Natural Poet ) कालिदासेप्यबाधितमेव। यतो हि निसर्गकविरित्यस्य निसर्गतः कविः निसर्गप्रेमी कविःइति द्वावर्थौ भवतः। तत्र निसर्गतःकविर्नाम जन्मजातः कविरित्यर्थः। कालिदासस्य वरकवित्वविषये न कोप्यरासिकमन्तरा विप्रतिपद्यते। तदीयनिसर्गप्रेम च काव्ये प्रतिसर्गं साधु स्पष्टं व्यक्तीभवति। प्रकृतिसामरस्यमेवहि महाकविलक्षणं व्याख्यन्ति-पाश्चिमात्यपुरातत्वविदः। प्रकृतिपुरुषयोस्सरससंलाप एव हि काव्यं नाम कवयो नाम निसर्गमातुः प्रकृतिदेव्या अङ्काश्रयप्रणयिनः सुव्यक्तवर्णरमणीय-वचःप्रवृत्तयःतनया एव। साव्यक्तरमणीयवचःप्रवृत्तिरेव काव्यम्। न तत्र कृत्रिमता, न वाऽस्वाभाविकता, नापि दुर्ज्ञेयता वा संभाव्यते।

कालिदासस्य ऋतुसंहारकाव्यमपि एतादृशेष्वेव निसर्गकाव्येषु अंतर्भवति तत्र चादर्शीयाऽस्यदभुता सृष्टिनिरीक्षणशक्तिः साध्वासादयत्प्रात्याविष्करणम्। कश्चिदांग्लसमालोचकसुधीशेखरः भारतीयैर्विशेषतोप्यपुरस्कृतमेतदल्पधिः काव्यमुद्दिश्यैवमुद्गिरति।

With glowing descriptions of the beauties of nature in which erotic scenes are interspersed, the Poet acroitly interweaves the expression of human emotions. Perhaps no other work of kalidass manifests so strikingly the poets deep sympathy with nature, his keen powers of observation and hisskill in de picting an Indian landscape in vivid colours.

तत्सारः—श्रृङ्गाररसतरङ्गितविविधसन्निवेशमधुरनिसर्गसुषुमासौन्दर्यवैभवानां दीप्तिमत्सवर्णनाभिः मानवीयहृदयोन्मीलद्भावनालहरीरपि लोकोत्तरचारुचतुरिम्णा अन्तर्वयति कुशाग्रकुशलमतिः काव्यकुविन्दः कालिदासः। प्रायः प्रकृत्या निकटसंबन्धं सान्द्रस्नेहं कवयितुर्गाढानुरागं सहानुभूतिं तथैव तदीयसृष्टिरहस्या-

विष्करणचातुरीं सूक्ष्मनिरीक्षणशक्तिं च न काचिदप्यदसीयाऽन्या कृतिरेवं प्रादुष्करोति यथेयं अरविन्दघोषप्रभृतयोप्यर्वाञ्चः पौरस्त्यविमर्शकधुरीणाः ऋतुसंहारस्य सौन्दर्यं स्वारस्यं सौष्ठवं स्वाभाविकमाधुर्यं च सम्यक्परीक्ष्य साधु समुपावर्णयन्त ।

कालिदासस्य निसर्गप्रीतिः तदीयेतरकाव्येष्वपि गोचरीभवति । तदीयदृष्टौ प्रकृतिर्न जडा परन्तु सचेतनं सान्तःकरणं सहृदयं च किञ्चिद्वस्तु । अत एव खलूच्यतेऽभियुक्तैः" रवेरप्यगोचरं कविः प्रत्यक्षीकरोति इति । यानि किञ्च सामान्यजनानां दृष्टौ निर्जीवानि निर्विकारजडानि च दृश्यन्ते तान्येव कविदृष्टौ सचेतनानि मृदुहृदयानि भावनापूर्णानि सहानुभूतिमन्ति च भवन्ति । अत एवोक्तं कुमारसंभवे ' समदुःखामिव कुर्वती स्थलीम् । मन्मथनोन्मथनोन्मनस्काया रत्याः दुःखे जडा स्थल्यपि सहभागिनी सहभोगिनी चासीद् इति प्रतिपादयति । रघुवंशेऽपि गोकर्णनिकेताश्रयिणःईश्वरस्योपवीणनार्थमुदग्रावृत्तिरथेन यतो नारदस्य आतोद्यनिवेशितकुसुमस्रक्संपर्कमात्रेणैव हृतजीवितामिन्दुमतीमालोक्य " विहगाः कमलाकरादय. समदुःखा इव तत्र चुक्रुशुः " इत्यनेन तिर्यग्जातावपि हार्दिकम्रदिमानमाविर्भावयति । मनुष्यापेक्षया पशुपक्षिणामेव हृदये सविशेषा सहानुभूतिःसमदुःखदुःखिता च वर्तते इत्यभिप्रेत्ययं कविसम्राट् । तत्रैवच ।

" विलपन्निति कोसलाधिपः करुणार्थग्रथितं प्रियां प्रति ॥
अकरोत् पृथिवीरुहानपि स्रुतशाखारसबाष्पदूषितान् " ॥

इत्यनेन वृक्षाणामपि सदयान्तःकरणत्वं मृदुलहृदयत्वं च प्रतिपादयति । वन्हिप्रवेशव्यक्तीभूतोज्ज्वलपातिव्रत्यामपि जगन्मातरं मैथिलीं केवलाजनापवादक्षालनरूपस्वार्थसाधनाय बन्धुषु साक्षात्पत्यावपि निर्दाक्षिण्यं निष्करुणं च विजनवने परित्यजति तदीयां दीनदीनां दूनदूनां च दुर्दशामालोक्य तिर्यग्जातीनां हृदयसन्तापवेदनादिकं साधु समुपदर्श्य मानवीयहृदयस्य कठोरतां स्वार्थान्धतां निर्घृणतां कृतघ्नतां च सम्यग् ध्वनयति । पश्यत पशुपक्षिवृक्षाणां वैक्लव्यं विह्वलतां च सीतापरित्यागे—

"नृत्यं मयूराः कुसुमानि वृक्षाः दर्भानुपात्तान्विजहुर्हरिण्यः । तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि" अयि वाचकवरेण्या । को ह्यन्यः कालिदासात् कविः प्राणिजातहृदयकवाटमुद्घाट्य तत्रोन्मीलद्भावतरङ्गाणां सलीलचलनवलनानि प्रकटयितुं शक्नुयात् । को वा कालिदासादपरः तिर्यक्हृदयान्तस्सम्यक्प्रविश्य तत्रत्यभावान् स्वयमनुभूय परानप्यनुभावयितुं प्रभवेत् । यः खलु कविः जीवानां हृदयपेटिकापुटनिगूढं हार्दं काव्येषु प्रनिध्वनयति स एव महाकविः । भारतेकालिदास एक एव तादृशसमस्तजीवजातसंकल्पप्रतिनिधीभूतोयथार्थो वरकविः । नान्यः कश्चिदपि ।

महत्येव खल्वस्य प्रकृतिसौन्दर्यविवर्णयिषा । तत्र तत्र काव्येषु अन्तरान्तरा सम्यक्स्फुटीभवत्यस्य निसर्गशोभासमुपवर्णनव्यसनिता । प्रायः सर्वत्रापि संयमनशालिनी अस्य लेखनी सृष्टिसौन्दर्यनिरूपणावसरे निस्सङ्कोचं अनिर्बन्धं स्वैरं च प्रसरति । कुमारसंभवे नगाधिराजस्य गौरीगुरोर्हिमवत्पर्वतस्य अप्राकृतं सौन्दर्यं विविधैश्चतोरञ्जनचञ्चुभिरनेकैश्लोकैःसमुपवर्णयन् आत्मानमपि विस्मरतीव । अहो सृष्टिसौन्दर्यवर्णनायातिशायिता तु ताऽस्य कविरत्नस्य यदयं कुमारसंभवकाव्यमारभमाणः प्रारिप्सितकाव्यस्य निर्विघ्नपरिसमाप्त्यर्थमवश्यमनुष्ठेयमपि मङ्गलं समाचारितुं मंगलाचरणाऽस्मगर्व खण्डनादिकृत त्रिचतुःश्लोकनिर्माणपर्यन्तम् अन्तराद्रिच्यमानानिवार्यदुर्दम्यपार्वतरमणीयकवर्णनोत्कण्ठां नियन्त्रयितुमप्यशक्नुवानः कामपि पीठिका मप्रस्तुवन् अस्त्युत्तरस्यामिति पर्वतवर्णनमेवारभते । इतरकाव्यनाटकेषु आदौ परमेश्वरप्रार्थनारूपमङ्गलं समुपनिबध्य ततआत्माभिमानखण्डनपूर्वकमन्यादृशसौजन्यविनीतिनम्रताद्याविष्कृत्य नम्रत्वेनैवोन्नमति । परं निसर्गवर्णनात्मकानाम् ऋतुसंहारमेघदूतप्रभृतिखण्डकाव्यानां कुमारसंभवसदृशप्रकृतिवर्णनाप्रधान बृहत्काव्यस्य च प्रारम्भावसरे सीमातिगामिनी निसर्गवर्णनोत्कण्ठा तीव्रा चोत्सुकता तस्य कविवरस्य स्वकीयमंगलसंप्रदायपरिपालनार्थमप्यवकाशं नैव ददाति । किंच कवेर्निसर्गशोभाव्यामोह इयद्बलवान्विद्यते, यत् तेन

स्वकीयसकलकाव्यनाटककथावस्तुस्थलसन्निवेशादीन्येतादृशान्येव निर्वाचितानि, यत्र प्रकृतिविलासप्रकाशनाय पौष्कल्येनैव महीयानेव अवकाशः स्यात् । तस्य विश्वविश्वम्भरावासिसकलसहृदयसमुदयहृदयसन्तर्पणोल्हासनपटुतरे शाकुन्तले आदितोयावदन्तं प्रतिपदं स्फुटीभवत्यदसीयंनिसर्गप्रेमित्वम् । कथायाश्च तस्याः प्रकृतिसौन्दर्यमन्दिरायमाणे आश्रम एव प्रारम्भः। कथाया जीवातुभूताः परिणामकारिण्यस्सर्वा अपि मुख्या घटना आश्रम एव निर्वर्त्यन्ते । प्रकृतिमातुः कृपाछत्रे याया घटनाः प्रचलन्ति तास्सर्वा अपि सर्वेषामपि मनस्तोषदायिन्य एव । परन्तु यदा प्रकृतिः परित्यज्यते, नगराभिगमनं विधीयतेतत्रैव हि दुःखपङ्कसंपर्केण कलुषीभवति कथानिर्मलसरसी । पुनर्निसर्ग-जनन्या उत्तुङ्गोत्सङ्गाङ्गणरङ्ग एव सर्वदुःखानां च परिमार्जनं सुखस्य समृद्धिःरविनाभावश्चेति कौशलेन प्रादर्शि निसर्गस्यौन्नत्यं माहात्म्यं च । एकया दृष्ट्या शाकुन्तलं नाम प्रकृति-विकृत्योःप्रकृतिविजयपर्यवसायिनः संग्रामस्य किमपि हृदयग्राहि रूपकमेव । सुखसौकर्यानुसारी विकृतजगत्प्रतिनिधिभूतः दुष्यन्तः । शैशव एव मातापितृभ्यां निर्घृणशिरोमणिभ्यां निरनुक्रोशं प्रकृतिमातुरङ्कपर्यङ्क एव विसृष्टा प्रकृत्यपत्यभूतैस्सहृदयशकुन्तैस्सस्नेहं लालिता पालिता आश्रमेमृगशावैः सममेधिताच शकुन्तला प्रकृतिदेव्याः प्रधानपुत्री । तदनयोः कथायाः परिणामो नाम अन्ततो विकृतेः प्रकृतिं प्रति शरणागमनं तत्पादपतनं ( राजा सप्तमेऽङ्के शकुन्तलापादयोः प्रणिपत्य पश्चात्तापं व्यनक्ति ) स्वदोषनिवेदनंच । तदेत त्स्वात्मनः सदाकूतं समग्रेनाटके शतकृत्वः नैकान्प्रसङ्गानुद्दङ्क्य तत्र तत्र उद्गिरति कविः । तैरुद्गारैः कवेः निसर्गाभिमुखी प्रवृत्तिः प्रकृतिपक्षपातः तरुलतापशुपक्ष्यादिषु सविशेषस्नेहश्च साधु व्यक्तीभवन्ति । " दूरिकृताः खलु गुणैरुद्यानलता वनलताभि " रित्यादिवाक्यैर्वनपक्षपातिता द्योत्यते ।

अहो सन्निवेशघटनापटीयस्त्वं कालिदासस्य, यत् आबाल्यात् कृतकसौन्दर्यसौकर्यमयवातावरणप्रवृद्धस्य अपरिचिताऽनालोकितपूर्वप्रकृतिमाम्राज्यसीम्नः राजर्षेरैदंप्राथम्येन आश्रमागमने कीदृशं कियदहृदयंगमं च मधुर-

सन्निवेशविशेषं तदीयचक्षुषोः पुरतःसमुपस्थापयति । अनुमालिनीतीरं नैकतपस्विजनसंकुलं सन्ततप्रवृत्तहोमधूमस्तोमरमणीयं पावनतमं शान्तमाश्रमपदम् । इतस्ततस्सञ्चरन्तः स्वच्छन्दचारिणः कुरङ्गशावकाः । फलकुसुमसमृद्धिनम्रस्तरुलताकुञ्जः । तत्र च निरलंकारकमनीयाः नागरिकविलासानभिज्ञाः बान्धवनिर्विशेषं तरुलतादिषु स्निह्यन्त्यः मुग्धा शालीनतपस्विकन्यकाः । तासां च निष्कपटा सरलमधुरा निसर्गबान्धव्यावेदिका सरससंभाषणशैली चेति सर्वमेतद्रमणीयतमं सत्यमेव प्रसभं हरतिमानसं सचेतसः । तासां च संवाद एव सम्यक्स्फुटीभवति आश्रमवासिनां निसर्गस्नेहः "हला शकुन्तले । तातकाश्यपस्य त्वत्तोपि आश्रमवृक्षकाः प्रियतरा इति तर्कयामि । येन नवमालिकाकुसुमपेलवात्वमप्येतेषामालवालपूरणे नियुक्ता "इति अनसूयायास्तातस्यआत्मनि प्रीतिनैयून्यप्रदर्शनपरां वृक्षेषु च प्रेमाधिक्यप्रतिपादनपरां च वाचमेनामुपनिशम्य शकुन्तला न मात्सर्यग्रस्ता असूयाकलिषित हृदया वाऽभूत् प्रत्युत " अस्ति मे सोदरस्नेह एतेषु । नकवलं तातनियोग एव इत्यनेन तासु च तरुलतासु स्वस्याप्यनितरसाधारणप्रेमाणमाविष्करोति । एतादृशवृक्षवल्लरीमृग दिसंगोपनसंवर्धनजनितश्रमःस्साभिमानं सादरं संपरितोषं चाङ्गीकरणीय इत्यावेदयति कविराजः अनया संवादभंग्या ।

परन्तु नागरिकवातावरणसंप्रवृद्धः दुष्यन्तः कथं वा जानीयात् निसर्गोपासनाविधिम् । कथन्तरां च शक्नुयाद्वृक्षाणामालवालपूरणे लतानां प्ररोहणे च क्रियान्वा तत्श्रमविस्मारको अभूतपूर्व आनन्दो वर्तत इति । सः जडानां वृक्षादीनां कृते मधुराकृतीनामायासं निष्फलं मौर्ख्यद्योतकं च मनुते । अत एव ता एतादृशश्रमजनक ( तासामानन्दजनक ) कर्मणि नियुञ्जानं काश्यपम् 'असाधुदर्शी' ति समुपालभते । "ध्रुवं स नीलोत्पलपत्रधारया समिल्लत्तां च्छेत्तुमृषिर्व्यवस्यति " इत्यनेन अव्याजमनोहराया शकुन्तलाया आश्रमधर्म ( आलवालाम्बुनिषेकमृगसंवर्धनादि ) नियोजकं एतादृशमूर्खकोटिषु तं मुनिं परिगणयति यः नीलोत्पलपत्राधारया समिल्लतां छेत्तुमपि व्यवस्येत् । सहजं खलु तद् एतादृशोद्गिरणं नागरसंस्कारसंस्कृतस्य । परन्तु एष

एव आश्रमनिवासिनां नित्यमेवानिर्वचनीयानन्दसन्दायको व्यवसायः । तादृशस्यापि राज्ञः नैसर्गिकवल्कलवेषभूषितायाः शकुन्तलायाः अकृत्रिमसौन्दर्यं निरीक्ष्य अनेकरत्नाभरणभूषितशुद्धान्तसीमन्तिनीप्रसाधितसौन्दर्ये हीनताबुद्धिरेवोदेति । " शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य " इत्यादिना वन्यसौन्दर्यस्य मनोमोहकतामभिदधाति । बहुप्रपञ्चितोऽनेन वल्कलधारणव्यतिकरः । अमूल्यपीताम्बरकौशेयवासोभिरेव परिपुष्टालंकारश्रियमनुभूतवतो राजर्षे राजसंस्कारः वल्कलस्य अलंकारश्रीपोषकत्वं नाभ्युपगच्छति । अत एव काममननुरूपमस्या वयसो वल्कलमित्यभिप्रैति । परं शकुन्तलावपुषि प्रत्यक्षीक्रियमाणा वल्कलहेतुकालंकारश्रीपरिपुष्टिः वितथयतितदीयानुभवम् । कथं वाऽ तेन स्वकीयचक्षुषोऽनुभवोऽपलप्यताम् । एवं पूर्वानुभवप्रात्यक्षिकप्रतीत्योर्विरोधं चमत्कारिकया रीत्या चारुचातुर्या च परिहरति उक्तिभङ्गीवैचित्र्येण ।

" सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति । इयमधिकमनोज्ञा वल्कलेनापि तन्वी किमिवहि मधुराणां मण्डनं नाकृतीनाम । " अत्रध्वन्यमानं समस्यापरिहारप्रकारं निरूप्यतर्कतन्त्रकुशलेषु कुशाग्रधीषुत्राचकेषुनवयमूहाशक्तिवैकल्यमारोपयितुमिच्छामः ।

कालिदाससृष्टौ लतावृक्षाः नाचेतनपदार्थाः, परन्तु मानवीय सकलभावनानुभोक्तारः रसिकाः सचेतसो जीविन एव । अत एव शकुन्तला ' केसरवृक्षः मां त्वरयति ' पल्लवांगुभीरित्याह । तेषामपि नवतरुणिम्नि विवाहमहोत्सवाः ससंभ्रमं सोत्साहं च जरीजम्भ्यन्ते स्म । एवमनयैव दिशा कालिदासस्य यदि शाकुन्तलादीनि प्रतिपत्रं परीक्ष्यावलोक्यन्ते, तदा भूयांस्येव तदीयनिसर्गप्रेमसाक्षीभूतानि वचनानि सन्निवेशाश्चोपलभ्यन्ते शक्यन्ते चोदाहर्तुम । परं लेखपरिणाहभिया दिङ्मात्रं प्रदर्श्यविरम्यते ।

अहो । क्वचिदपि साहित्ये केनापि कविशेखरेण प्राणिजेद्धिजयोः प्रगाढा मैत्री एतादृशी द्रढीयसी समुपवर्णिता वर्तते इति कल्पनापि कस्य-

चित् चेतःकुहरे किं कदाचिद्ध्यायायात् । अहो । कल्पनाकौशली कालिदासस्य । यतः पश्यन्तु

'क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं निष्ठ्यूतश्चरणोपभोगसुलभः लाक्षारसः केनचित् । अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितैर्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः' । अयि वाचकतल्लजा ! यत्सत्यंमनेन श्लोकेनैकेनैव कालिदासः प्रपञ्चविद्यमानानिखिलांनिसर्गकविगणमस्तकेषुपदांनि धातुं क्षमते । मनुष्यमनुष्येष्वपि मिथः एतादृशाव्याजफलानपेक्षिपावनतमोदात्तदैविकप्रेमस्नेहसंबंधसंशोधनविभावनसमुपवर्णनादिकठिणकर्मालंकर्मीणलोकोत्तरकवित्वप्रतिभाप्रभाप्रभाविताः विरलविरला एव समुपलभ्यन्ते पुरुषसरस्वतयः समग्रेऽपिजागतिकवाङ्मयीनप्रपञ्चे ! कथं तर्हि कुत्र वा समुपलभ्येत मनुष्यमनुष्येतरप्राणिनां हृदयमंदिरे मिथस्तु दृशस्वर्गीयप्रेमदेवतां साक्षात्कृत्य जनानां पुरतः प्रकटीकुर्वन्स्कविरत्नम् । अहो । प्राकृतिकप्रेमोन्मनस्कता कवीशितुः यदयमुद्भ्रान्त इव शकुन्तलानिर्गमनकाले सर्वानपि वनस्पतिप्रमुखान् आमन्त्रयति अनुज्ञानार्थम् ।

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या । नादत्ते प्रियमंडनापि भवतां स्नेहेन यापल्लवम् । आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवःसेयं "याति शकुन्तला पतिगृहं सर्वैरनुज्ञयाताम । "

अहो । व्यामोहः कविकुलचक्रवर्तिनः, यदयं निर्वाचः तरुलता अप्यनुज्ञानार्थमार्तरवेण प्रार्थयते । मेघदूतपद्यस्य प्रेमोन्मत्ताः प्रकृतिकृपणाश्चेतनाचेतनेषु" अयमेव पादो विपरिवर्तते चिरात् तं श्लोकमनुध्यायतो मम मनसि । कालिदासः नैजापत्यदारादिष्वपि एतावत्स्निह्यति स्म वा नवेति संदेग्ध्यस्मन्मानसम् । अस्मिंश्च वसुन्धरावलये विद्येत किमिदृशी क्वचिदपि साध्वीकुलशिखामण्डनमणिस्सती या खल्वपीते पतौ पिपासितापि पातुं नव्यवस्येत् पयः । कालिदासः परं वनस्पतिविषयेऽपि एतादृशममानुषमपार्थिवमकृत्रिममव्याजमविच्छिन्नमपारमफलापेक्षमसीमदिव्यप्रेमाणमबिभर्ति । न केवल-

भैषेव शकुन्तला तेषु प्रणयनिर्भरा, परं तेऽपि पशुपक्षिवृक्षमृगमुखाः किंबहुना समग्रप्रकृतिरेव यथेयं तत्र तथैव सविशेषं स्निह्यन्ति तस्यामपि। तदेवप्रदर्श्यते कविना—

शकुन्तला—( सप्रणामं परिक्रम्य जनान्तिकम् ) हला प्रियंवदे नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरः प्रवर्तेते।

प्रियंवदा—न केवलं तपोवनविरहकातरा सख्येव। त्वयोपस्थित-वियोगस्य तपोवनस्यापि तावत्समवस्था दृश्यते।

उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः अपसृतपाण्डुपत्रा मुञ्चन्तीवाश्रूणि लताः।

शकुन्तला—( स्मृत्वा ) तात। लताभगिनीं वनज्योत्स्नां तावदाम-न्त्रयिष्ये। ( लतामुपेत्य ) वनज्योत्स्ने। चूतसंगतापि मां प्रत्यालिंगेतो-गताभिः शाखाबाहाभिः। अद्य प्रभृति दूरपरिवर्तिनी भविष्यामि।

काश्यपः—सङ्कल्पितं प्रथममेव मया तवार्थे भर्तारमात्मसदृशं सुकृतैर्गता त्वम्। चूते न संश्रितवती नवमालिकेयं तस्यामहं त्वयि च संप्रति वीतचिन्तः। इतःपन्थानं प्रतिपद्यस्व।

शकुन्तला—( सख्यौ प्रति ) हला। एषा द्वयोर्युवयोर्हस्ते निक्षेपः"। सन्निवेशमेतदनुवाचयतां वनज्योत्स्ना नाम शकुन्तलाया लता-भगिनीति तत्त्वस्य विस्मरणमेव भवति। तयोरन्योन्यानुरागं विरहकल्पनाजातव्यथां चान्वीक्ष्य एते शकुन्तलावनज्योत्स्नेसमानोदर्यौवा यमळभगिन्यौवा, भवे-तामित्येवप्रतीतिरुदेति। लोकेत्वेकोदर्योपि सोदर्यः भवेतावद्दूयन्ते मिथो वियो-गवासरे। अत्रैव हि कालिदासः निसर्गप्रेम्णः चरमसीमानमुपस्पृशति। अत्र तरुभिरपि कोकिलकाकलीव्याजेन अन्वज्ञायि शकुन्तलागमन मित्युत्प्रेक्षते

तद्यथा—कोकिलरवं सूचयित्वा।

"अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः परभृतविरुतं कलं यथा प्रतिवचनीकृतमेभिरीदृशम्।"

आकाशे

रम्यान्तरः कमलिनीहरितैः सरोभिः छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः शान्तानुकूलपवनश्च शिवश्च पन्थाः ।

इत्याभ्यां द्वाभ्यां श्लोकाभ्यां वनस्पति-वनदेवताभिरनुज्ञा दत्तेति भावयति भावुकाग्रेसरः कविः तदेवाह—" जाते ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः । प्रणम भगवतीः । " अहो । कविप्रभावः यदूअपरिस्फुरन्यमानवाचोऽपिऽजडा अपि पदार्थाः कविकर्णकुहरमागत्य वाग्मिवद् व्याहरन्ति स्पष्टमेव । अयि वाचकाग्रेसराः । लेखदैर्घ्यभिया विरिरंसुरपि नपारयाम्यदसीयात्युत्कटनिसर्गप्रणयातिरेकप्रकटसाक्षीभूतमिदं पद्यरत्नमनुदाहृत्य विरन्तुम् । ' कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः । शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः श्रृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानांमृगीम् ' ।

किं कश्चिदपि प्राकृतिककविरियन्मनोहरतरमेतावत्सौन्दर्यगरिष्ठं-यथार्थप्रकृतिचित्रं साहित्ये समुपस्थापयितुं शक्नुयात् । सर्वथा रमणीयतमम् अवद्यं हृद्यं चैतत् पद्यं सर्वजनास्वाद्यं । सर्वत्रापि जगति नकस्मिन्नपि साहित्ये एतादृशं कमनीयतमं निसर्गचित्रं मार्गयताप्युपलब्धुंशक्यते । अन्यान्येतदियानि पद्यानि, सन्निवेशाश्च सकलकविगणनाप्रसङ्गेअनामिकाधिष्ठितनाम्नःसार्थक्यमेवापादयन्ति ।

न केवलं शाकुन्तले परं तदीयेतरकाव्यनाटकेष्वपि तदीयमन्तरानियम्यमानमुत्कटं नैसर्गिकं प्रेम प्रतिपत्रं व्यक्तीभवत्येव । तदेतत्सर्वस्याप्यत्र विवरणा कृशोदर्यां मधुरवाण्यां नैव मिमीत इति वाचकजनोहाशक्तावेव दृढं विश्वसन्तः कतिपयपद्यविशेषान् वाचकजनावगाहनार्थं निरूपयितुमभिलाषामः ।

कालिदासः स्वकीयासु सर्वास्वपि कृतिषु यावच्छक्यं यथामति च हृदयङ्गमभङ्ग्या प्रकृतिशोभामाविष्करोत्येव समुपवर्णयत्येव च । प्रायः तदीय सर्वनाटकेष्वपि प्रणयिद्वन्द्वस्य तारामैत्रकं प्राथमिकसमागमश्च उपवन-तपोवन-

गततरुलतामण्डपमञ्जुनिकुञ्जेष्व त्र संजाघटीति। शाकुन्तलकथा तु प्रकृत्युदर एव प्रचलति। मध्येकिञ्चिन्नगरसंपर्कमुपगतापि अन्ततः पश्चात्तापतप्ता पुनःपि निसर्गसाम्राज्यमुपगत्यैव परिसमाप्तिमुपगच्छति।

कुमारसंभवे तु प्रकृतिरेव प्रधानपा त्रमूढ्वा काव्यस्यान्यादृशमेव शोभाविशेषं पुष्णाति। स्वदेशीयविदेशीयवाङ्मयप्राङ्गणे समालोडितेपि एतादृशविचित्रकाव्यं नैव परिदृश्येत यत्र निसर्गः स्वयमेव प्रधाननायिकाभूमिकमङ्गीकृत्य कथां प्रचालयेत्। निसर्गवर्णनयैव प्रारभ्यते इदंकाव्यं। अन्तरान्तरा च प्रतिसर्गं सृष्टिसौंदर्यं यथेच्छमेवोद्गीयते। चतुर्थसर्गे रतिशोकावसरेऽपि न व्यस्मार्षीद् आत्मीयं निसर्गप्रेमाणमभिव्यञ्जयितुम्। अहो विचित्रयैव रीत्या रतिमरोदयद् यदियं मदनमरणे तदीयबन्धूनामात्मानश्च का वा दशेति विचिन्त्य नै विलपति, परंतु—

"हरितारुणचारुबन्धनः कलपुंस्कोकिलशब्दसूचितः। वद संप्रति कस्य बाणतां नवचूतप्रसवो गमिष्यति॥" इति चूतकुसुमस्यैव कृते नितान्तं परितप्यति। रतिरत्र तदेकोपजीविनामगतिकानामनाथानामांसष्ठानां कामदहनेन समुत्पन्नमहद्दुःखप्राग्भारं न किञ्चिदप्यनुलक्षयन्ती केवलं भृङ्गविहंगमानामेव गुरुशोकमनुस्मृत्य अंतरत्यन्तं परिदूयते। यथा

"अलिपंक्तिरनेकशस्त्वया गुणकृत्येधनुषो नियोजिता।
विरुतैः करुणस्वनैरियं गुरुशोकामनुरोदितीव माम्॥"

किञ्चरतिः 'प्रतिपद्य मनोहरं वपुः पुनरप्यादिश तावदुत्थितः' इत्याशास्ते।

उत्थितः सन् किमेष मीनकेतनः कुर्यात् अत्रोत्तरयति निकामकमनीयकलेवरा कामकामिनीयं यद् "रतिदूतिपदेषु कोकिलां मधुरालापनिसर्गपण्डिताम्।" अहो अत्र किं रतिमेव मूर्खां व्यपदिशामः, उत कालिदासमेवानभिज्ञं प्रतीमः। का वा सती मृत्युमुखात्प्रत्युज्जीविते पत्यौ प्रथमतस्सर्वमपि परित्यज्य कोकिलदेशार्थं तं प्रेरयेत्। अथवा कामस्य पुष्पबाणत्वात् तत्कुसुमसायकमौर्व्या मधकरमयीत्वात् कोकिलालापस्य च कामोत्तेजकत्वाच्च युज्येत कदाचिद् मदनपत्न्यास्तथा परिदेवनम्। परमिन्दुमतीवियोगावसरे अजोऽप्येवमेवाक्रन्दति रघुवंशाष्टमसर्गे-

"मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमौ ।
अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसांप्रतम् ॥
कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति ।
अलकाभरणं कथं नु वा तव नेष्यामि निवापमाल्यताम् ॥
स्मरतेव सशब्दनूपुरं चरणानुग्रहमन्यदुर्लभम् ।
अमुना कुसुमाश्रुवर्षिणा त्वमशोकेन सुगात्रि शोच्यसे ॥
तव निश्वसितानुसारिभिर्बकुलैरर्धचितां समं मया ।
असमाप्य विलासमेखलां किमिदं किन्नरकण्ठि सुप्यते ॥

अहो अपूर्वोयं कालिदासस्य शोकप्रकारः कुत्रापि साहित्ये अदृष्टचरः, यत्र लतावृक्षादिकर्मासमाप्तिरपि महत्येव हानिरिति शुच्यते ।

कालिदासस्य पुत्रः तन्मरणसमये पितुरंतिकमुपेत्य तं "तातः का भवतः चरमाशा, परिपूरयितुमहं बद्धादरोस्मि, कथयेति सविनयमप्राक्ष्यत् चेत् तदा"

"परलोकविधौ च मामये तनयोद्दिश्य विलोलपल्लवाः ।
निवरेः सहकारमञ्जरीः प्रियचूतप्रसवो हि ते पिता ॥

इत्येव सः उत्तरयतिस्म निस्संशयम् । एतावद्भूमिगंतस्तस्य तरुलताकुसुमकिसलयमञ्जरीभ्यामोहः ।

उपमानपदे च तरुकुसुमादय एव प्रायः भूयिष्ठतया वारं वारं प्रयुज्यन्ते तत्र तत्रानेन कविमण्डलीपुण्डरीकषण्डमार्तण्डेन ।

यथा—अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥
सुरयुवतिसंभवं किल मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥
कास्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥
इदमुपनतमेवं रूपमक्लिष्टकान्ति प्रथमपरिगृहीतं स्यान्नवेति व्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं नच खलु परिभोक्तुं नैव शक्तोमि हातुम् ॥

प्रलोभ्यवस्तुप्रणयप्रसारितो विभाति जालग्रथिताङ्गुलिः करः। अलक्ष्य-पत्रान्तरमिद्धरागया नवोषसा भिन्नमिवैकपङ्कजम्। त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्या मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति। मेघदूते साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम्। मेघदूते। जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम्। मेघदूते। स्मयमानमायताक्ष्याः किञ्चिदभिव्यक्तदशनशोभि मुखम्। असमग्रलक्ष्यकेशरमुच्छ्वसदिव पङ्कजं दृष्टम्। मालविकाग्निमित्रे। स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श। अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम्। रघुवंशे-रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः॥ रघौ। प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः। नद्वल्गुना युगपदुन्मिषितेन तावत् सद्यः परस्परतुलामधिरोहतां द्वे प्रस्यन्दमानपरुषेतरतारमन्तश्चक्षुस्तव प्रचलितभ्रमरं च पद्मम्। रघौ आरण्यकोपात्तफलप्रसूतिस्तम्बेन नीवार इवावशिष्टः॥ रघौ एवं परःशता एव श्लोकाः कालिदासकाव्यत उद्धृत्य समुदाहर्तुं शक्यन्ते। परं पत्रिकाया अस्या तनीयस्तामनुलक्ष्य इयतैव विरमामः। तदेतत्सकलमपि केवलतरुलताकुसुमपल्लवमृगशकुन्तादिविषयकप्रेम्ण एव प्रदर्शनं प्रपञ्चनं चाकारि अस्माभिः।

परंतु नदनदीनिर्झरगिरिगुहागण्डशैलदरीसानुक्षेत्रक्षितिजकासारतटाकप्रपातशाद्वलग्रामश्यामलसस्यशालिवसुन्धरोइल्लोलकल्लोलकोलाहलमयापारनीरनिधि-सूर्यचन्द्रग्रहगणनक्षत्रमण्डलनीलनभोवितानविद्युल्लतापयोदराजिसूर्योदयास्तसन्ध्यारागचान्द्रिकालोकमुखानन्तासख्योच्चावचस्थावरजङ्गमपदार्थगर्भितं बृहत्प्रकृतेर्विराट्स्वरूपमपि कविना यस्माक्षात्कृतम्, तदेतत्प्रदर्शयितुं नास्तिनोऽवकाशः। रघुवंशस्य प्रथमद्वितीयचतुर्थपञ्चमषष्ठनवमत्रयोदशषोडशादिसर्गेषु कुमारसंभवस्यापि प्रथमतृतीयपञ्चमषष्ठाष्टमादिसर्वसर्गेष्वपि शाकुन्तले तु सर्वत्रापि तादृशप्रकृतिसौन्दर्यदर्शनं कारयति कविमण्डलमूर्धन्यमणिः। एतावतापि तस्य प्रकृतिसौन्दर्यवर्णनाकण्डूतिरनुपशमितेव लक्ष्यते। यतो हि निसर्गप्रशंसानुस्यूतनैककाव्यनाटकानि निर्मायापि तत्र विषयान्तरस्य प्रति-

पाद्यमानत्वात् केवलप्रकृतिवर्णनार्थं यथेच्छमलब्धावसरः तावता मध्ये मध्ये निसर्गवर्णनेन अपरितृप्तमनाः केवलप्रकृतिवर्णनपर एव द्वे काव्ये चारुचतुरिम्णा व्यरचद् ऋतुसंहार-मेघदूताभिधे । अत्र सृष्टिसौन्दर्याविर्भावनमेव प्रधानोद्देशः । अनियन्त्रितैव प्रवर्ततेऽत्र हि स्वच्छन्दशेमुषी । आभ्यामेव लघीयसीभ्यां कृतिभ्यां कालिदासः विश्वकविरजरामरकविश्च समपद्यत । यतो हीदानीं विदेशीय-वाङ्मयेषु "भावगीत" Lyric-Poetry नामकलघुगीतिविशेषाणां सार्वत्रिक-प्रचारो दृश्यते, तादृशभावगीतसाजात्यं सन्दृश्यतेऽस्मिन्कालिदासीयकृतिद्वये द्विसहस्रवर्षेभ्यः प्रागपि । अत एव निसर्गसौन्दर्यप्रदर्शनपरकाव्याभ्यासव्य-सनिभिर्गेटप्रभृतिपाश्चात्यविमर्शकमल्लैः कालिदासीयमेघदूतं नाम सार-स्वतसंसार एव अर्घ्यमूल्यरत्नमिति सादरं तोष्टूयते । तदेतयोरुभयोरपि काव्य-योस्सर्वग्राहिविमर्शनमिदानीमवकाशाभावाद् अन्यदा चिकीर्षामि । अयि विम-र्शकवर्याः वाचकधुर्याः अस्माभिर्यथाबुद्धिबलोदयं कालिदासस्य निसर्ग-कवित्वं प्रत्यष्ठापि प्रत्यपादि प्रादर्शि च नैकोदाहरणपूर्वकम् तदत्र अवश्यवक्तव्यानां केषांचिदंशानामनुक्तिः अनावश्यकानां केषांचिदुक्तिश्च संजाता भवेत् । परं तदेतत्सकलमपि तितिक्षेरन् अक्षामक्षमाः प्रेक्षावन्तः विमर्शक्षमा इति बाढं विश्वस्य विरमामि विस्तरात् ।

---

# आग्रानगरे प्रवृत्ते अ. भा. सं. महासम्मेलने.

## श्री के. एम्. मुनशी श्री महोदयानां प्रारम्भभाषणम्.

गीर्वाणवाणीप्रणयिनो विद्वद्वराः !

अखिलभारतीयसंस्कृतसम्मेलनस्यास्य प्रतिष्ठापनसंस्कारे ममाद्य सुमहानानन्दः । सर्वथा अभिनन्दनीयोऽयमवसरः । अस्ति च मम साभिलाषं आश्वासो यद्, यदा सम्मेलनस्यास्य विसर्जनं, भविष्यति तदा, न केवलं भारतवर्षे अपि तु समस्ते जगति, "संस्कृतभाषाध्ययनप्रवर्धनं आर्यसंस्कृतेः अभ्युदयः, प्रादर्शनं च भवेयुः" इति प्रतिज्ञानुकूलानां सर्वासां प्रवृत्तीनां समन्वये इदमेव सम्मेलनं लब्धप्रतिष्ठं वीर्यवत् निमित्तं साधकं च भविष्यतीति ।

मॅकॉले–महाशयेन अस्मान् संस्कृतिविषये पाश्चात्यविचारपरिपुष्टान् परोपजीविनः कर्तुम् अनर्थावहः प्रयोगः समारब्धः । तदानीम् आर्यसंस्कृतिः अस्माकं हृदये, पारम्पर्ये, जीवितविषये च नितरां बद्धमूला नाभविष्यच्चेत्, सुदृढोऽस्माकं भारतीयत्वाभिमानः समूलघातम् उपहतोऽभविष्यत् । एतस्य भारतीयत्वाभिमानस्य विलोपने वत्सरशतं यावत् कृताः प्रयत्नाः नैव चरितार्थाः सञ्जाताः ।

आर्यसंस्कृतेः मूल्यानिरूपणविषये अभिनवा काचित् पुनर्व्यवस्थितिः मम दृष्टिगोचरा भवति । नेयमतीतेतिवृत्तस्य निश्चैतन्यप्रत्युज्जीवनरूपा । अपि तु सा आर्यसंस्कृतिः इदानींतना शक्तिः समस्तमनुजगणमुपदिशन्ती, नितान्तमम्लानसत्त्वा नित्यं वीर्यप्रदा काचित् शाश्वती संस्कृतिः एव ।

आर्यसंस्कृतेः अस्याः संस्कृतभाषा कोशमन्दिरं, प्रेरणास्थानं, निमित्तकारणं च । आधुनिकविद्यापरिष्कृतैः कैश्चिद् भारतीयैः मन्यते यद्

ग्रीक-लेटीन-भाषादिवत् संस्कृतभाषाऽपि मृतभाषेव, परिमितैरधीयमाना ऐतिह्य वशेषतुल्या, कस्मिंश्चित् जैनमठान्तर्भागे पांसुशुष्काणां पण्डितानां संशोधनविषयभूतेति । किन्तु संस्कृतभाषा मृतेति वक्तुं नैव शक्यते । नापि सा पुरातत्त्वविदां प्राचीनवस्तुसंग्रहालये कौतुकोत्पादकं किञ्चिद् वस्तु । सा तु चैतन्ययुक्तैव भाषा । सा अस्मिन् देशे परःसहस्रं मनुजैः स्वमातृभाषेतेऽव्यतिरेकेण भाष्यते । अस्मिन् विस्तीर्णे भारते लक्षसंख्याकासु संस्कृत-पाठशालासु सा अध्ययनमाध्यमतया उपयुज्यते । पाठशाला--विद्यालय--विश्व-विद्यालयादिसंस्थासु लक्षसंख्याका विद्यार्थिनः संस्कृतविद्यातः उत्साहशक्तिं लभमानाः स्वजीवने प्रशस्ततमं यापयन्ति । संस्कृतभाषाया लालित्यं सौन्दर्यं शब्दपाटवं च सर्वासु प्राचीनार्वाचीनभारतीयभाषासु संक्रान्तानि सन्ति । गते चरम शते पाश्चात्यसंस्कृतिसंपर्कवशात् संस्कृतेन निखिले भारत-वर्षे वाङ्मयविषयं संस्कृतिविषयं च एकं नवीनं पुनरुज्जीवनं प्रकटीकृतमस्ति । सर्वासु भारतीयासु भाषासु अनन्तवाङ्मयप्रवाहरूपेण एतत् पुनरुज्जीवनं व्यक्तीभवति । कोटिसंख्याकैः मनुजैः जीवनविषये विविधमूल्यनिरूपणाय या चोदना प्रेरणा वा लब्धा तस्याः संस्कृतमेव सञ्चेतनम् प्रभवस्थानम् । भारतीयोऽयमात्मा आविर्भूतशक्तिः तेन संस्कृतेनैव व्यक्तीभवने समर्थः कृतः । सा शक्तिः अद्यतनसमयेऽपि इतः आर्यसंस्कृतिं पुनर्ग्रहीतुं प्रकटीकर्तुं वा प्रयतते ।

संस्कृतविद्याध्ययनस्य एतानि दुर्दिनानि सन्ति । प्राचीनरीत्या संस्कृत-पाठशालासु प्रचाल्यमानाध्ययनं न समयानुरूपं, न वा प्रगतिलक्षणं नापि च विवेचनदृष्टियुक्तं अस्ति । पाठशालाविद्यार्थिनः विविधेषु आचारेषु आन्हिकेषु च श्रद्धां लभन्ते । किन्तु आर्यसंस्कृतेः मूलभूतेषु तत्त्वेषु संस्कृतविद्यया दर्शयमानायां विपुलायां श्रद्धायां तेषामभिनिवेशो न भवति । संस्कृताध्ययनस्य समन्वयाय सार्वत्रिकी काचिदेका परिषद् अपेक्ष्यते । अस्यां सर्वाः संस्कृत-विद्यापीठस्य संस्थाः संश्लिष्टाः स्युः । इदं सर्वथा महत्तरं आवश्यकं च । अत्र अध्ययनक्रमाणाम् अनुरूपपरिवर्तनेन नियमनं करणीयं भविष्यति । उपाधिपद-

वीदानविषये अधिकृतायाः केन्द्रवर्तिन्याः संस्थायाः मुद्राङ्कनमप्यपेक्ष्यते। अनेन इदमेवार्थात् प्राप्तं भवति यद् भारतेऽस्मिन् कतिपयानां प्रधानसंस्थानाम् अखिलभारतीयसंघसंविधानार्थं एकीभवनं आवश्यकं भवति। काशीलाहोरादिस्थलेषु "ओरिएन्टल कॉलेज" इति नाम्ना विख्यातः विद्यालयाः, कलकत्तानगरे "बेंगॉल संस्कृत एसोसिएशन" बम्बईनगरे "भारतीयविद्याभवनं" मद्रासतिरुपति—इत्यादिस्थलेषु संस्कृतविद्यालयाः इति एताः सर्वाः संस्थाः संभूय समुत्थानं कुर्युः इति मे मतिः। तासां संभूयप्रयत्नेन अखिलभारतीय संस्कृतपरिषद् उद्भविष्यति या समस्तभारते संस्कृतविद्यायाः अवस्थापयिष्यति। अयमेव सुलभः पन्थाः येन अखिलभारतीय—संस्कृतविश्वविद्यालयस्य प्रतिष्ठापनं भविष्यति।

अस्माकं अर्वाचीनेषु विश्वविद्यालयेषु प्रचाल्यमानं संस्कृताध्ययनं अपर्याप्तं यन्त्रवन्निर्जीवनं च भवति। विश्वविद्यालयादुत्तीर्णः संस्कृतभाषाविशारदः संस्कृतं अन्यपक्षप्रतिपादकपदानां प्रतिपादनं, अन्ततो वा संशोधनाय रसप्रदं विषयं मन्यते। तस्य संस्कृताध्ययने प्रीतिः जगद्धितार्थं क्रियमाणे संस्कृतस्य उपदेशे श्रद्धामूला न भवति, नाऽपि सा प्रीतिः दृढानुरागवद्धा। आङ्ग्ल—जर्मन—पुस्तकसंग्रहणेन तस्य विविधविवेचनपद्धतिषु व्युत्पत्तिः भवति, किन्तु यदध्ययने स स्वजीवनसमयं यापयति तद् आर्यसंस्कृतेः स्फुरच्चेतनं गौरवं अपश्यन्, अन्धवदतिक्रामति।

यथाऽस्मद्देशेऽन्ध इव पुरत एव सदपि सर्वं सौन्दर्ययुक्तं वस्तु नैव शक्नोति द्रष्टुम्।

विश्वविद्यालयानुबन्धिभिः प्राध्यापकैरेव नियन्त्रितरूपैरध्यापनप्रकारैः संस्कृतविद्याया उद्धरणे प्रयतितव्यम्। समस्ताऽपि विद्याविवेचनप्रकाराः सर्वथा विपरिणामं प्रापणीयः। व्याकरणं, काव्यं, दर्शनशास्त्रं इदानीमिव अनावृत्तं न संपादनीयम्। संस्कृतवाङ्मयस्य प्रबोधक आदर्शः सर्वस्यापि प्रबुद्धस्य समीपं प्रापणीयः। इन्ग्लैंडदेशे आङ्ग्लेयानां हृदि शेक्स्पीयर इव सर्वेषामपि भारतीयानां हृदयेषु व्यासः, वाल्मीकिः, कालिदासश्च संवसेयुः। वंशपरं-

परामधिवसन्त आचार्या एव मानवानां जीवितपद्धतिं परिष्कुर्वन्ति—उदीरयन्ति च, तद्वारैव स्वीयं शाश्वतिकमुपदेशम् ।

इदानीं स कालः समुपागतो यत्र संस्कृतभाषयाभिवृद्धिं प्रापिताभिर्विविधाभिर्भाषाभिः प्रचल्यमाना विद्यानुबन्धिनः संस्कृत्यनुबन्धिनश्च व्यवहारा अङ्गाङ्गिभावमापादनीयाः ।

उदयपुरे मदुपदर्शितया दिशा भारतीयभाषासु शतेऽष्टाशीतिभाषाः संस्कृतपदानां प्रभूतं संग्रहमावहन्ति । अथत्वे वह्व्यो भारतीया भाषाः स्वाभिवृद्धौ वीर्यवत्त्वे च नूनं संस्कृतस्याधमर्णा एव । एकैकाऽप्यासु भाषासु प्रवर्धमानं ग्रन्थराशिमोजोयुक्तं वाङ्मयसंप्रदायं चावहति ।

भारतीयानां मार्की सर्वासामपि भाषाणां सम्बन्धिनीः परिषदो वयमधिविशामः । एतासां संस्थानां निविडतरः संश्लेषः आवश्यकः । एतद्देशीयो विद्यापरिणामः समानमाकारं समानमुद्देश्यं भजते; संस्कृतवाङ्मयसंबन्धिनः सौन्दर्यस्यानुषङ्गेण, पाश्चात्त्यानां वैलक्षण्येन स्वातंत्र्येण च देशेऽस्मिन् प्रणष्टविद्यापुनरधिगमः संपादनीय इत्ययं सूक्ष्मतरो विषयः सर्वैः सर्वथा विज्ञेयः ।

इदमस्माभिः संपादनीयमस्ति किन्तु; आर्यसंस्कृतिविषये अल्पश्रद्धायुक्ता बहवो जना अद्यतने जीवनव्यवहारे प्रधानाधिकारमारूढाः सन्तीति न विस्मरणीयम् । यस्तेषां देशस्य महत्तमः प्रतापगरिमा स तेषां सर्वथाऽनधिगतः । यस्मिन् संस्कृतिपाठे तेषां जीवनमवस्थितं भवति तस्य शक्तेर्लालित्यस्य च चिन्तने स्वदर्पावरोधात् ते समर्था न भवन्ति । पाश्चात्यस्य सर्वस्य वस्तुनोऽभिनन्दने स्वकीयस्य सर्वस्य तिरस्कारे तेऽभिमानं कुर्वन्ति । किञ्च प्रगतिलक्षणानां निष्कलङ्कानां छात्राणाञ्च कक्षायां ते न गण्येरन्निति भयात्तदा तदा केचन नरास्तत् अस्माकं संस्कृतेः पलायिता भवन्ति । विदितं मे यन्मम केचिद्सुहृदः संस्कृतस्येत्कटानुरागिणं प्रगतिरहितं राष्ट्रभावनाविरुद्धमिति मान्यमानास्त स्कुर्वन्ति । भद्रंमन्यानां तेषामियं स्वभद्रत्वकल्पनाऽज्ञानजनितमदोद्दतत्वमुक्ता ।

अनेकवर्षशतकं यावदस्माभिः संस्कारमयजीवनस्यैकीभावोऽनुभूत इति कारणादेव वयमद्यैकं राष्ट्रं स्मः । यदस्मत्स्वपि काचिदेका राष्ट्रीया संस्कृतिरस्ति, तस्याः कारणमिदमेव यत् संस्कृतं यानि च वस्तूनि संस्कृतेन समर्पितानि तैः युगे युगे कोटिसंख्याकानां मनुजानां जीवनं साकारं कृतमस्ति । भाषाविशिष्टो वाग्व्यवहारो जीवनदर्शनं स्वत्वेऽवगाढीनि यानि निर्मितानि तैर्वयमेकीभावमनुभवामः । अस्माकं या राष्ट्रीया भावना तस्याः कारणमपीदमेव यदद्यतनैर्भारतीय-नेतृभिः संस्कृतेर्मौलिकतत्त्वं अर्वाचीनजीवनप्रकारैर्व्यक्तीकर्तुं प्रयत्यते । अद्य वयं यद्विधाः स्म तथा नाभविष्याम, यदि दयानंद आर्यसंस्कृतिं बहोः कालादनुवृत्तायास्तन्द्राया नोदधरिष्यत्, यदि रामकृष्णपरमहंसो जीवनेश्वरसाक्षात्कारं कृत्वा तामभिनवं प्रामाण्यं न प्रापयिष्यत्, यदि विवेकानंदः अरविन्दो वाऽद्यतनजीवनाय तस्या रहस्यं पुनर्नाप्रकाशयिष्यत्, यदि च गान्धीजिः तस्याः मौलिकतत्त्वानुरूपं जीवनमनुभूयास्मिन्देशे कोट्यवधिकेषु जनेषु श्रद्धाप्रवाहान् नोदतारयिष्यत् । अनया संस्कृत्या वयं जीवाम । अस्याः कृते वयं जीवामः । अस्यामेव, अनयैव च, वयमास्माकीनं श्वस्तनकालं निर्मास्यामः ।

न विस्मर्तुमर्हामो यदृते संस्कृतं आर्यसंस्कृतिर्यादृशी वर्तते तादृशी नैवाभविष्यत् ।

भारतवर्षं यत्प्राणिति तदार्यसंस्कृतिवशादेव । यदद्याखिलं विश्वं बहुधीभूतैर्जडवादैराकुलीकृतमस्ति तदा भारतस्यात्र या स्वातंत्र्याभिलाषाऽस्ति सा समस्ते जगति मानवजीवनविषये आर्यसंस्कृतिं प्रतिपादयितुमेव वर्तते । यद्भारतस्यौन्नत्यं भविष्यति तस्य कारणमार्यसंस्कृतेरुपलब्धा परंपराप्राप्ता च काचिदमूना शक्तिरेव भविष्यति ।

किन्तु यां संस्कृतिमहं मम दृष्टिगोचरां कल्पयामि साऽद्यतनजीवनमनुलक्ष्याभिनवमूल्याङ्कितैव । अतीतेनिवृत्तस्य केवलं पुनरुत्थानमस्मभ्यं न रोचते । गतमेतिवृत्तश्च न कदापि पुनरुत्थापयितुं शक्यते । अणुशक्तियुगस्यास्य धानुष्कयुगेऽस्माभिर्विपरिणामः कर्तुं न शक्यः । कतिपयैः प्रहरैरेव यदा वयं लण्डननगरं विमानगत्या प्राप्तुं क्षमास्तदा वयं ग्रामेष्वेव नियमितां स्थितिमनुभवितुं नार्हाः स्मः ।

किन्तु संस्कृतेन प्रतिपाद्यमाना संस्कृतिः किं जीवन्ती मृता वा। जीवन्ती चेत् सर्वेऽपि नवीनवत्नग्रहाः स्वीकर्तव्याः स्युः। ऍंग्लो–सॅक्सन्–चीन–आरब–रशियनादिसंस्कृतीनां नवीनैः संपर्कैः सह समाधानं कार्यं स्यात्। नूतनानां विचाराणां वचनानाञ्चास्माभिर्विनिमयः, स्वीकरणं, स्वात्मीकरणञ्च कार्याणि स्युः। अतोऽस्माकं संस्कृतिरिदानीमिव तेजस्विनी समर्था च भवितुमर्हति। आगामिनि काले च प्रवर्धनाय सन्नद्धा भवितुमर्हति। अनित्यांस्तदीयानलङ्काराभासान् त्यजेम। शाश्वतेषु तस्या मूल्येषु आसक्ता भवेमेति शम्।

---

आगरानगरे १६।१७।१८ नवंबरे १९४९ प्रवृत्तस्य

# अ. भा. सं. सम्मेलनस्य स्वागताध्यक्ष भाषणम्.

---

अयि गीर्वाणवाणीविलसितान्तःकरणाः श्रद्धेया विद्वद्वराः,।

स्वागतं समुपस्थितानां नेतॄणां सर्वेषां संस्कृतविदुषां संस्कृतहितैषिणाञ्च विद्वज्जनानाम्। नूनं महान्तमानन्दमनुभवामि-श्रीमतां भारतभूमिभागालंकर्तॄणां महात्मनां सतां पुण्यदर्शनेन। हर्षस्य खलु कल्याणस्य चापूर्वोऽयमवसरो यत्सर्वेऽत्रभवन्त एकस्य महच्छ्रेयस्करस्य शुभकार्यस्य सम्पादनाय सभायामस्यां सम्मिलितरूपेण समुपस्थिताः। सर्वेऽप्यत्र भवन्तः पूजायाः सम्मानस्य प्रेम्णश्च भाजनानीति मे दृढा निष्ठा। भृशं कृतार्थोऽस्मि, अनुगृहीतोऽस्मि सर्वेषामत्रभवतां शुभदर्शनमात्रेणैव, सहयोगप्रदानस्य प्रशंसा तु सर्वथा वाणीवर्णनशक्तिपरिधौ न वर्तते। धन्यवादार्हाः सर्वेऽप्यत्रभवन्त इति कथनमात्रेण तु मेऽन्तर्वर्तिनी श्रद्धा अंशरूपेणापि प्रकाशिता न भवति। विषयोऽयं वाचामगोचरः। भारतीयविद्याप्रचारसमित्या श्रीमतां सेवायै

प्राधान्येन नियुक्तोऽयं जनः सर्वथाऽयोग्योऽस्ति कार्यस्यैतस्य सुसम्पादनाय। न कोऽपि गुणो मयि वर्तते इति सर्वेऽत्रभवन्तो जानन्त्येव। किन्तु विदुरगृहे कृष्णस्य शाकभोजनवृत्तान्तं विचार्य, रामस्य च शबरीप्रदत्तोच्छिष्टबदरीफलग्रहणोदन्तं स्मरन्, अहमपि किंचित् समुत्सहे केवलं 'पत्रं पुष्पं फलं तोयम्' अत्रभवद्भ्यः समर्प्य सत्कारविधिं सम्पादयितुम् युक्तप्रान्तीयस्वागतकारिणीसमितेः पक्षात्। अहं तु श्रद्धापूर्वकं 'त्वदीयं वस्तु गोविन्द! तुभ्यमेव समर्पये' भवद्भिः कृपापूर्वकं क्षन्तव्या मदीया दोषास्त्रुटयश्चेति प्राञ्जलिः प्रार्थयामि, एवमेव स्वागतसमितेरपि।

अयि श्रद्धेयाः सभ्याः,

जानन्त्येवात्रभवन्तः सर्वे यद्वयमत्र राज्यस्वीकृतस्य एकस्याखिलभारतीय संस्कृतविश्वविद्यालयस्य स्थापनाविषये दृढनिश्चयं कर्त्तुमागताः स्मः। कीदृशः पुनीतोऽयमुद्देशः विश्वेऽस्मिन्, भारते तु विशेषतः। अथ संस्कृतविश्वविद्यालयस्य कीदृश्यावश्यकतेति नाविज्ञातं कस्यापि। देववाण्या माहात्म्यमपि भूमण्डलस्य सर्वे विद्वांसोऽद्य एकस्वरेण स्वीकुर्वन्तीत्येतदपि सुस्पष्टमेव। किन्तु तथापि सैव गीर्वाणवाणी अद्य मृतभाषेति नाम्ना प्रसिद्धेत्यत्र कानि कारणानीति विचारणीयः प्रश्नः। संस्कृताधःपतनकारणान्यपि गाम्भीर्येण विचारणीयानि। कथञ्च अधोगतिगर्तपातितेयं देववाणी पुनः समुन्नता भवेदित्यपि सम्यग् विवेचनीयम्। किन्तु सर्वप्रथममस्माभिः संस्कृतभाषाया गौरवपूर्णपुनीतोज्ज्वलातीतस्य पुण्यदर्शनमपि कर्त्तव्यम्।

आसीत्पुरा नूनं सोऽपि समयो यदा देववाणीयम् सम्पूर्णेऽस्मिन् विश्वेऽप्युन्नतिशिखरे समुपस्थिता सती विराजमानाऽऽसीत्। सर्वत्राऽपि च स्वप्रभावमहिम्ना सर्वेषां समादरभाजनं बभूव। कस्याविदितं यन्न केवलं भारत एव किन्तु भारतेतरदेशदेशान्तरेष्वपि प्राचीनकाले तस्याः प्रचार आसीत्। तदा गीर्वाणवाणी, न केवलं भारतवर्षस्य, किन्तु सकलविश्वस्य, न केवलं राष्ट्रभाषा, अपितु आन्तरराष्ट्रीयभाषाऽप्यासीदिति सर्वे पुरातत्त्वविद्वांसो जानन्त्येव। कथनेऽस्मिन् न काऽप्यत्युक्तिः, किन्त्वक्षरशः सत्यमिदं सर्वम्। अद्यापि देशदेशान्तरेषु समुपलभ्यमानैः संस्कृतग्रंथरत्नैर्देवालयखण्डैः संस्कृतशिलालेखैर्वाऽपि तस्या एव प्रचारातिशयस्तेषु देशेषूद्घोष्यते।

भूमण्डलेऽस्मिन् सर्वत्रैव संस्कृतप्रचार आसीदिति स्पष्टमेव। भारते तु तदा न केवलं वैदिककाले, तथा न केवलं वाल्मीकिव्यासकाले, अपितु भोजकालेऽपि संस्कृतभाषैव मातृभाषाऽऽसीत्। भोजराजस्य तु सुप्रसिद्धेयमाज्ञाऽऽसीत्—

विप्रोऽपि यो भवेन्मूर्खः स पुराद्बहिरस्तु मे।
कुम्भकारोऽपि यो विद्वान् स तिष्ठतु पुरे मम।

साहित्यमपि खल्वपूर्वं देववाण्याः। नूनमेव, गीर्वाणवाणी वेदवेदाङ्ग, दर्शन, पुराण, ज्योतिः, छन्दःशास्त्र, राजनीति, लोकव्यवहारादीनां सर्वेषामेव विषयाणामक्षुण्णो निधिरत्र न कस्यापि विवादः। विश्वस्य न काऽप्यन्या भाषेदृशी विविधप्रचुरसाहित्यसमलङ्कृता वर्तते।

किन्तु हा! कष्टं भोः! सैव देववाणी अद्यत्वे परामवनतिं प्राप्ताऽस्ति, सर्वथा संकुचितगात्री जीर्णा शीर्णा च दृश्यते। नूनं सा मृतप्रायैवेति महतीयं विडम्बना खलु!

संस्कृतस्यैवावनतिर्भारतस्य धर्मस्य संस्कृतेश्चापि ह्रासस्य कारणम्। अतोऽस्माभिर्बद्धपरिकरैर्भाव्यम् संस्कृतस्य पुनः प्रचाराय। एतदर्थमेवैव प्रवृत्तावत्रजमण्डले आगरानगरे राज्यस्वीकृतस्यैकस्य संस्कृतविश्वविद्यालयस्य स्थापनाय योजना निर्मिता स्वीकृतास्ति भारतीयविद्याप्रचारसमितिद्वारा। अपूर्वेयं खलु योजना। एतद्विषयेऽधस्तनः प्रस्तावः स्वीकृतोऽभूत्—

"अद्य भारतवर्षे संस्कृतभाषाया महान् ह्रासो जायते। दुःखदोऽयं समाचारो यदद्यास्मिन् देशे क्वचिदपि संस्कृतस्य माध्यमत्वं नास्ति। एकः सोऽप्यासीत् समयो यदा संस्कृतं न केवलं देशस्य धर्मभाषा, राष्ट्रभाषा वा सर्वसाधारणभाषैवासीत् किन्तु विश्वभाषा। भारतस्य सर्वेषूपनिवेशेष्वस्याः प्रचार आसीत्। सर्वे एतोपनिवेशाः संस्कृतमाश्रित्यैव भारतेन सह स्वसम्बन्धं रक्षन्ति स्म। परमद्य भारतीया एव तत्तिरस्कारं कुर्वन्ति का कथाऽन्येषाम्! देशेऽस्मिन् प्रायो ३२ कोटि हिन्दवो निवसन्ति ये सनातनधर्माणो,

बौद्धधर्मानुयायिन इत्यभिमन्यन्ते, परं किं ते न वञ्चयन्ति जनसमूहम् ? किमस्त्यपरापि काचिद्धिन्दुजात्यतिरिक्ता जातिर्या भवेदीदृशी स्वकर्त्तव्यधर्म-ज्ञानहीना ? भारतवर्षस्याधःपातकारणं केवलं संस्कृतभाषाया अधःपातः । यावदियं भारतराष्ट्रस्य प्रधानभाषा राष्ट्रभाषा, भाषणभाषा न भूयो भवति तावदस्य देशस्योद्धारोऽसम्भव एव । अत एव संस्कृतस्येमां घोरां दुर्गतिं निरीक्ष्य "आगरा-भारतीयविद्याप्रचारसमितिः" सर्वसम्मत्या निश्चिनोति यच्छीघ्रातिशीघ्रमेकः संस्कृतविश्वविद्यालयः' अत्र स्थापितो भवेत्, यस्मिन् संस्कृतभाषायां निहिता गूढातिगूढा विषया अध्यापिताः, परीक्षिताः प्रचारिताः, संस्कृतभाषाया माध्यमत्वायाधीतिनश्च सन्नद्धीकृताः स्युः ।"

## इयंच सर्वैरङ्गीकृता योजना—

१—सर्वेषां विषयाणामेवं विज्ञानादीनां कृतेऽपि सरलतम संस्कृतमेव शिक्षामाध्यमं भविष्यति ।

२—एकः केन्द्रीयमुद्रणालयोऽपि स्थापितो भविष्यति उच्चकोटिक-संस्कृत-साहित्यनिर्माणाय । अस्मिन् कार्ये देशस्य सुप्रसिद्धा विद्वांसो नियोक्ष्यन्ते ।

३—बालिकानां कृतेपि शिक्षायाः सुप्रबन्धो पृथग्भविष्यति यथा बालकानां कृते ।

४—एकाऽनुसंधानशाला, क्रियाशाला [ वर्कशाप ] अपि भविष्यति साहित्यिक-यान्त्रिकानुसन्धानकरणाय ।

५—अयं संस्कृतविश्वविद्यालयो राज्यस्वीकृतो भविष्यति, येन स्नातकानां जीवनयात्राऽपि सुखेन सिद्ध्येत्, अस्माकं विश्वविद्यालयस्य प्रमाण-पत्रस्यादरश्च भवेत् ।

६—एकस्य संस्कृतनगरस्यापि स्थापना भविष्यति, यत्र निवासिनः संस्कृतेनैव भाषणलेखनसम्बन्धिव्यवहारं सम्पादयिष्यन्ति । अस्मिन् विशाले देशे एकं नगरं त्वीदृशं भवितव्यमेव ।"

अतो मदीयं निवेदनमस्ति यदत्रभवन्तः सर्वे पुनीतकार्येऽस्मिन् साहाय्यं प्रदास्यन्ति। आशासे चाहं यत् सकलगुणसमलंकृतानां श्री सम्पूर्णानन्दजी भूतपूर्व यु० प्रा० शिक्षामन्त्रिणां सभापतिमहोदयानाम् अमोघ-निर्देशैः, अत्रभवतां सर्वेषां समागतानां नेतॄणां प्रतिनिधीनां विशुद्धसहयोगैश्च गीर्वाणवाणी पुनरेव पूर्ववत् परमोन्नतिशिखरासीना भविष्यति।

परं संस्कृतभाषायाः पूर्ववत् परमोन्नत्यै सर्वसाधारणप्रचाराय च इदमपि महद्‌गाम्भीर्येण विचारणीयम् अत्रभवद्भिः सर्वैर्विद्वद्वर्यैर्यत्कथं संस्कृत-भाषायां **सारल्यं** आगच्छेत्। वर्त्तमानरूपे तस्याः कदापि महीयान् सर्वसाधारणतः प्रचारो भवितुं न अर्हति। अद्य इयं सुरभारती देववाणी **अत्यन्तजटिला-कठिना विद्यते**। अस्मात् कारणात् अस्या यथेच्छम्-अभीष्ट-प्रचारो न जायते, न कदापि सा अस्य देशस्य पूर्ववत् सर्वसाधारणी भाषणभाषा मातृभाषा राष्ट्रभाषा च भवितुमर्हति यावदस्यां भाषायां **सारल्यं,** लेखने भाषणे च धाराप्रवाहत्वं न आगच्छति। परं जटिलतायाः कठिनतायाः कारणं किम्? विचारणीयोऽयं विषयः। **अस्मद्विचारानु-सारन्तु इदं सर्वं सर्वत्र सन्धिप्रयोगकारणात्**। अस्मद्व्याकर-णानुसारन्तु वस्तुतः सन्धिर्वैकल्पको विषयः। 'संहिता विवक्षायाम्' सर्वे संस्कृतज्ञा जानन्त्येव। एकोऽस्ति प्राचीनतमश्लोकोऽपि,

> सन्धिरेकपदे नित्यो नित्यो धातूपसर्गयोः।
> सूत्रेष्वपि तथा नित्यः स चान्यत्र विभाषितः॥

परं दुःखदोऽयं समाचारो यद्यो अपवादरूपेण तिष्ठतीति स नियमो जायते। अद्य कश्चिदपि पण्डितो न मन्यते यदि स नियमरूपेण लेखने भाषणे च सन्धिप्रयोगं न करोति। परम् इदमपि सत्यं यत्संस्कृतभाषायाः प्रकाराद्पंडिता अपि प्रायः सर्वत्रसन्धिप्रयोगे त्रुटिं कुर्वन्ति। संस्कृतज्ञानां प्रतिदिनस्य अनु-भवोऽयं यः प्रमाणं न अपेक्षते। न्यूनातिन्यूनं महतां पंडितानां लेखने भाषणेपि धाराप्रवाहत्वं न आगच्छति। द्वितीयं सन्धिकारणादेकशब्दस्य

विभिन्नवर्णानां संयोगे विभिन्नरूपाणि भवन्ति। अतएव कश्चिदपि संस्कृत-भाषायाः पठनपाठनातिरिक्तेन भाषण-सामार्थ्यमपि प्राप्तुं न शक्नोति, यदन्यासां सर्वासां भाषाणां गुणः। अतएव संस्कृतभाषायाः सर्वसाधारणत्वे मातृभाषात्वे राष्ट्रभाषात्वे आशा दुराशामात्रमेव। अस्मिन् सम्बन्धेऽपि न अस्माकं भाषायां कश्चिद्दोषो, न अस्माकं व्याकरणस्य, अपितु अस्माकमेव, अस्माकं दूषितविचाराणामेव। अन्येषाम् जनानाम् शिरसि दोषारोपणम् व्यर्थमेव। वयमेव स्वः स्वदेशदासतायाः, स्वसंस्कृतभाषायाः, स्वसभ्यतायाः, स्वसंस्कृतेश्च घोरपतनस्य अधःपातस्य एकमात्रकारणम। अद्यत्वे सहस्राधिकवर्षीया निद्रा भग्ना करणीया। यदि सा अज्ञाननिद्रा भग्ना न भविष्यति, तदा अद्य मृतप्राया संस्कृतभाषा श्वो मृता भविष्यति। तया सह अस्माकं विशालः अपौरषेय आर्यधर्मः आर्यसभ्यता, आर्य संस्कृतिः संक्षेपेण सर्वस्वं विलयङ्गमिष्यति। तेन सह अस्माकं अद्वितीयातीत-गौरवपूर्णा आर्यजातिर्विनष्टा भविष्यति देशदासतायाः पाशे सर्वकालेषु बद्धा भविष्यति वा। कः तदा भगवतां वेदानां सृष्टेरारम्भात् परम्परागतप्राप्तं-ईश्वरप्रदत्तं-अमरसंदेशं श्रीमद्भगवद्गीतादिशास्त्राणां दर्शनानां सद्ग्रन्थानां अध्यात्म-संवादं जीर्ण-पथभ्रष्ट-मनुष्यसमाजे दुःखित-संसारपरिवारे दास्यति। तदा अस्माकं सर्वा चेष्टा निष्फला, अस्माकं स्वराज्य-रामराज्याशा दुराशैव स्वप्न एव। अतएव अस्माभिः सर्वैः विशेषेण भारतीयनेतृभिः, धर्माचार्यैः, पंडितवर्य्यैः सर्वसाधारणजनताभिरपि सावधानैर्भवितव्यम्। अन्ते अहं भगवन्तम् परमात्मानम् अभ्यर्थये यत् स अस्मभ्यः सर्वेभ्यः सन्मार्गदर्शनाय ग्रहणाय च शक्तिं प्रदद्यात्। ओ३म् शम्।

अत्रभवतां समागत-विदुषाम् अनुचरः—

**रामचन्द्रगुप्तः ऐडवोकेट एम० एल० सी०,**

समापतिः, यु० प्रा० स्वागतकारिणी समितेः, आगरानगरम्।

---

# आग्रानगरे प्रवृत्ते
# अ. भा. सं. सम्मेलनाध्यक्षाणां
## श्री सम्पूर्णानन्दमहोदयानां भाषणम् ।

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः ।
देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवे दिवे ॥

विद्वद्वर्य्याः,

अस्य सम्मेलनस्य सभापतित्वाय मां वृत्वा या कृपा यश्च विश्वासो भवद्भिः मयि अदर्शि तत्कृते अनुगृहीतोऽस्मि । भवतां वयोवृद्धानां विदुषाञ्च साहाय्येन अनुष्ठानमिदं साफल्यमेष्यतीति आशा जायते ।

राजनीतिसमाजव्यवस्थादिविषयेषु नानामतावलम्बिनोऽपि येऽत्र वयं समवेतास्तेषां सर्वेषामत्र संस्कृतविषये ऐकमत्यम् । सर्वे हि वयं भगवत्या अमर-भारत्याः पादारविन्दमधुव्रताः, सर्वे हि वयं संस्कृतभाषायाः उन्नतिम् प्रचारञ्च सततम् इच्छामः । मानवजातेः या प्राचीनतमा वेदाख्या वाङ्मयविभूतिः तस्या भाषायाः लौकिकं स्वरूपं संस्कृतम्; आर्याणां धर्मशास्त्राणां मोक्षशास्त्राणाञ्च भाषा संस्कृतं; अस्माकं पथकृद्भिः पूर्वजैः ऐहिकामुष्मिकं यज्ज्ञानं समग्रीकृतं तत् सर्वं संस्कृतशब्देभ्य एव समर्पितं तैरेव दृढं संरक्ष्यते । संस्कृतं हि भारतीयसंस्कृतेः प्रतीकं भाण्डागारश्च । न हि इयं संस्कृतिः केवलं हिन्दूनां सम्पत्तिः । भारतीया मुसलमाना आर्याणामेव वंशजास्तेऽपि चित्रकला, वास्तुकला, संगीतादिषु शुद्धाम् आर्यसरणिमेव अनुसरन्ति । मुस्लिमगायकाः सामवेदात् संगीतस्य प्रणवाच्च साम्नः उत्पत्तिं कथयन्ति । सरस्वतीं, शंकरं, नारदं, तुम्बुरुं च संगीताचार्याः इति स्तुवन्ति । संस्कृतमूला वाचो भाषन्ते । धर्मेऽपि भारत-प्रचलित इस्लामे आर्य्यसंस्कृतेः प्रभावः प्रत्यक्षमेव दृश्यते । भगवतो गौतमस्य धर्म्मोपदेशैः सह भारताद्बहिर्गत्वा इयं संस्कृतिः स्याम-यवद्वीप-जापानादीन् देशान्

विजितवती । अद्यापि तत्रत्या धर्मकलावाङ्मयक्षेत्रेषु भारतीयभावानुबद्धा दृश्यन्ते । लङ्का-स्यामयोः संस्कृतबहुला भाषा राजकार्य्ये साहित्ये च प्रयुज्यते । मोक्ष-मूलरप्रभृत्यनुवादकानाम् प्रयासफलेन रामतीर्थविवेकानन्दसदृशसाधूनाम् प्रचार-सामर्थ्याच्च पाश्चात्यदेशेष्वपि भारतीयविचारधारासु अभिरुचिः संजाता । सन्ति केचित् यूरोपियनामेरिकनाविचारका ये योगाभ्यासरतनवब्राह्मणैः सञ्चालितं वेदान्तमूलकं समाजं संस्थापयितुकामा वर्तन्ते, एतादृशरूपे एव समाजे लोकस्य कल्याणं त्राणं च मन्यन्ते । अलं विस्तरेण । श्रौतागमबौद्धजैनसूफीसिद्धनाथसन्ना-दिनानेर्मिममयविचारमहासिन्धुना यन्निरन्तरं सिञ्चितं भवति, येन धर्म्मकालवाङ्म-यादिव्याजेन स्वदेशीयेभ्यो विदेशीयेभ्यश्च कोटिकोटिमनुष्येभ्यः स्फूर्तिः पुरा अद्यापि अद्य दीयते भविष्यत्स्वपि कालेषु दास्यते तत्संस्कृतं सर्वैरेव मानवकल्याणका-ङ्क्षिभिः सयत्नं रक्षणीयम् । आत्महत्यां कर्तुमुद्यतस्य लोभमोहजनितसंघर्ष-दग्धस्य जगतः एकमात्रत्रात्री श्रुतिलब्धप्राणा भारतीयविचारधारा भारतीया च संस्कृतिः । तस्याः परिच्छदस्य संस्कृतस्य परिरक्षणं सर्वेषामुदारधियां कर्तव्य-मिति निश्चीयते ।

परन्तु संस्कृतमद्य महादुर्दशायाम् पतितं वर्तते नात्र कोऽपि विवादा-वसरः । पराधीना प्रताडिता प्रपीडिता परिशोषिता इयं देवदुर्लभा भारत-भूमिर्विदेशीयैः शास्यते । तैर्वञ्चकैः कृतान् भारतीयसंस्कृतिमूलोच्छेदयत्नान् पश्यन्तोऽपि भारतीया आत्मगौरवसंरक्षणाक्षमा मन्त्रमुग्धा इव निश्चेष्टा दृश्यन्ते । स्वातन्त्र्यमेव अस्य महारोगस्यौषधम् । यदा 'अंग्रेजा । भारतं त्यजत' त्यान्दोलनं स फलीभूतम्भवति तदैव संस्कृतं स्वगौरवमयं स्थानम् पुनः अलंकरिष्यति ।

किन्तु न केवलम् अंग्रेजान् शप्त्वा वयं इतिकर्तव्यतां यास्यामः । यदि संस्कृतमद्य मृतभाषासु परिगण्यते तर्हि तत्र संस्कृतज्ञा विद्वांसोऽपि दोषभाजः । संस्कृतं कठिनं संस्कृतं कठिनमिति रटन्तः केचित्पण्डिताः विद्यार्थिनः अपसारयन्ति । मा कश्चित् संस्कृतं पठेदिति तेषां लक्ष्यं प्रतीयते । विस्मृतमेभिः यन्मासत्रयाभ्यन्तरे सामान्यमेधसां नीतिपुराणेति-

ह्रासानां भाषा प्रायशः सरला सुबोध्या च भवति । अध्यापनशैली च संस्कारमपेक्षते । सर्वोपरि पाठक्रमे संस्कारस्य आवश्यकताऽनुभूयते । भूगोलेतिहासराष्ट्रभाषाज्ञानं समावेश्यम्, समावेश्यञ्च राजार्थशास्त्रयोः विज्ञानदर्शनयोराधुनिकयोर्ज्ञानम् । विना एतेन, संस्कृतगर्भा विद्या अर्थकरी न भविष्यति । व्यवहाराकुशला लोकाभ्युदयविद्याः अजानन्तः संस्कृतविद्यालयानां स्नातका अध्यापका एव भवितुं शक्नुवन्ति । अनेन साधनेन अत्यल्पसंख्याकाः एव सुखेन चरिष्यन्ति । दर्शनविज्ञानार्थशास्त्राणां येऽभिनवाः सिद्धान्तास्तानजानन्तो संस्कृतच्छात्रा विदुषाम् मध्येऽपि न शोभन्ते स्वशास्त्रसम्मतसिद्धान्तान् प्रतिपादयितुमप्यक्षमा वर्तन्ते । यावत्संस्कृताध्ययनाध्यापनमेवं संकुचितं तिष्ठति तावत्तेन राष्ट्रबलं न प्राप्स्यते । पण्डितानां राष्ट्रमर्मस्पृशां समस्याः प्रति यदौदासीन्यं तदपि संस्कृतस्योन्नतौ मार्गावरोधि । यस्मिन् विद्यावारिधौ अचूडान्तं स्नात्वऽपि मनुष्ये लोकसंग्रहबुद्धिर्नोदयति, यस्या विद्याया उपासकानां हृदयं शोषणोत्पीडनादिभिर्ग्रामकण्टकैर्न दूयते तया विद्यया सहास्माकं कः सम्बन्ध इत्युपेक्षा स्वाभाविकी । सर्वैः संस्कृतप्रेमिभिरेतेषां दोषाणां निवारणाय प्रयतितव्यम् ।

भवन्तः संस्कृतविश्वविद्यालयस्य संस्थापनं स्वोद्देश्यं मत्वा अत्र समागताः । अद्यापि सन्ति काश्चित् संस्था या विश्वविद्यालयवत् विद्यार्थिभ्यो शिक्षां यच्छन्ति परीक्षोत्तीर्णेभ्य उपाधींश्च समर्पयन्ति । आसु काशीस्थगवर्नमेण्टसंस्कृतकालेजम् । यदि भवद्भिः प्रस्तावितेन विश्वविद्यालयेन एताअनुकृत्यैव भवितव्यं तर्हि तस्यावश्यकता न विद्यते । भवतु तत्र संस्कृतं शिक्षाया माध्यमम् । तदापि नूतनसंस्थास्थापनाय नहि पर्य्याप्तं कारणम् । परन्तु यदि भवन्तः लोकसेवायै योग्यनागरिकान् निर्मातुकामाः, यदि भवन्तः प्रचलितपाठक्रमे कालानुसारि मौलिकपरिवर्तनं कर्तुं प्रस्तुताः, तर्हि अस्यां दिशायां निश्चयेन यतध्वम् । यदि संस्कृतज्ञा व्यवहारकुशला आधुनिकज्ञानसम्पन्नाश्च न भवेयुः, यदि ते लोकसेवाकार्य्ये अन्यैः सहयोगदानं न कुर्युः, तर्हि संस्कृतस्य क्षेत्रं सत्स्वपि शतविश्वविद्यालयेषु उत्तरोत्तरं संकोचं गमिष्यति,

भाषा च इयं कष्टात् कष्टतरमनुभवन्ती मृता एव भविष्यति ।

नहि संकल्पमात्रेण, सम्भावितपुरुषाणामाशीर्वचनेन, धनसंग्रहमात्रेण वा, विश्वविद्यालयः पुष्पितो भविष्यति । सन्ति कतिपये आदावेव विचारणीयाः प्रश्नाः । के तत्राध्यापकाः के च च्छात्रा भविष्यन्ति ? सन्ति बहवो विद्वांसो ये संस्कृतं ब्रह्मक्षत्रियवैश्येषु एव परिसीमयितुम् इच्छन्ति । संस्कृतं राष्ट्रभाषा भवत्विस्यान्दोलनस्य विरोधकैः स्पष्टमुच्यते यद्यदि संस्कृतं राष्ट्रभाषापदं प्राप्स्यति तर्हि शूद्रादयोऽपि सर्वे संस्कृतं पठिष्यन्ति येन धर्म्मक्षेत्रे महाननर्थ उत्पत्स्यति । संस्कृतं राष्ट्रभाषां स्वीकुर्वतामपि बहूनाम् मते वेदाध्ययने द्विजातीनामेवाधिकारः, अन्ये तु केवलं सामान्यं व्यावहारिकं ज्ञानमर्हन्तीति । नेदं मतं समीचीनम् । परधर्म्मावलम्बिविदेशीयान् संस्कृतज्ञान् कृत्वाऽपि पण्डिता धर्म्मस्खलिता जातिच्युता न भवन्ति किन्तु वैदिकधर्म्मावलम्बिने शूद्राय विद्यादान महापातकभयं तानभिभवति । किमाश्चर्य्यमतः परम् । योऽन्त्यजो राष्ट्रभाषेयम् इतिमात्रबुध्या संस्कृतव्याकरणे लब्धप्रवेशो वर्तते कस्तं वेदाध्ययनाद्वारयितुं शक्नोति ? भवतामत्र का सम्मतिः ? भवताम् विश्वविद्यालये जातिभेदात्पठनाधिकारभेदो भविष्यति न वा ? आर्य्यानार्य्याणां द्विजाद्विजानां सर्वेषामद्य राज्यसञ्चालनेऽधिकारः इति न विस्मर्तव्यम् ।

पूज्य पण्डित मदनमोहनमालवीयेन व्यवस्थापितं यत्स्त्रियो वेदवेदान्ताध्ययनं कर्तुमर्हन्ति किन्तु पौरोहित्यशिक्षां प्राप्तुं न शक्नुवन्ति । नात्र बहूनाम् पण्डितानां स्वारस्यम् । कार्तिककृष्णद्वितीयाया अङ्के साप्ताहिकसंस्कृतस्य सम्पादकः स्पष्टं लिखति अस्मद्विचारेऽयं निर्णयः सर्वथा अशास्त्रीयः । स्त्रियो गुरुमुखान्नियमानुसारं वेदाध्ययने सर्वथा असमर्था इति । संहिताभागे वागम्भृणी प्रभृतयो मन्त्रद्रष्ट्र्यः श्रूयन्ते, ब्राह्मणभागे मैत्रेयीगार्गीप्रभृतीनां स्त्रीणां गुरुमुखाद्ब्रह्मज्ञानोपदेशप्राप्तिः दृश्यते, तथापि वेदाध्ययने तासामधिकारो न स्वीक्रियते । या जगति मन्त्रब्राह्मणात्मकस्य वेदस्यावतार-

हेतव आसन् तासां दुहितॄणां वेदेऽधिकारो नास्ति। मातुः सम्पत्तौ दुहितुरेवाधिकार इतिसिद्धान्तोऽपि दुराग्रहबुद्धिभिरनादृतः। अस्तु। एतान् अन्यांश्च एवंभूतान् प्रश्नान् विचार्य्य स्वनिर्णयस्य लोकमतात् समर्थनं सम्प्राप्य एव भवद्भिः विश्वविद्यालयायोजने संलग्नैर्भवितव्यम्।

भारतीयसंस्कृतिः संस्कृतञ्च जगताम् अनन्यतुल्या विभूतिः। या वेदेभ्यो निस्सृता कल्याणमयी वाक् अद्यापि भारतीयजीवनं परिप्लावयति सा सर्वेभ्यो लोकेभ्यः स्फूर्तिं दास्यति, सर्वांश्च मनुष्यान् कल्याणं नेष्यति, लोके धर्म्मभावं विस्तार्य्य सर्वेषामभ्युदयनिःश्रेयसौ साधयिष्यतीति ध्रुवोऽस्माकं विश्वासः। भवतां विश्वविद्यालयोऽपि अस्मिन् पुण्यप्रयासे उपकरणम् भूयादिति सर्वेषाम् संस्कृतहितैषिणामाकाङ्क्षा। धनिकवर्गो विद्वत्समाजो राज्यञ्च अस्मै प्रश्रयं दास्यति इत्याशास्महे।

धर्म्मव्रतचरो लोके, सर्वो भवतु सर्वदा।<br>
अस्तु सर्वः स्वरूपस्थः, सर्वः श्रेयांसि पश्यतु॥<br>
इति शम्।

---

# अस्मदीयो मुम्बापुरीप्रवासः

अतीतसमरावसरोऽविलम्बेन मधुरवाणीसमुत्कर्षतर्षाकुला धनिकजनहस्तावलम्बनार्थमगच्छाम वयं कुबेरनगरविडम्बिनीमम्बरचुम्बिप्रासादशिखराडम्बरां मुम्बापुरीम्। या किलानवरतं रत्नाकरसमाश्लिष्टा विपुलैश्वर्यविद्योतिता नूनमवद्यति राजराजस्यापि धनमदम्। ललितविलासिनीलावण्यप्रभाप्रभास्वरा दूरादवधीरयत्यप्सरसोऽपि। अगण्यमेघाविमूर्धन्यमाणिगुरु-

समुज्ज्वला नैकस्थापत्यकुशलालङ्कृता च सुरपुरमपहसन्त्येकगुरुमेकत्वष्टृकम् । वहुलकविकुलसमाकुला भूरिकाव्यालापा च सममेव स्पर्धते देव-दानव लोकाभ्याम् । या च विविधाम्बरनिष्पादनकुशला यन्त्रागार ( मिल् ) नलिकाभिर्धूमच्छलेन मलिनयति न केवलं विममलम्बरतलमपितु कर्मकारिनरनारीचरितम । अहो यत्र सुरालया अपि नरान्कलयन्त्यसुरान् । यत्र श्वश्रू-श्वशुरादिबन्धुग्रहविनिर्मुक्तास्त्रपानिर्मोकच्युताः प्रणयिदम्पत्यः पन्नगा इव सन्ध्यासमये स्वच्छन्दं मन्दं गन्धवहमासेवन्ते सिन्धुतीरे शिशिरशीकरासारबन्धुरं सरसंसल्लापसुखमनुभवन्तो मिथः करग्रहसमुदञ्चितरोमाञ्चाः । यत्र नैके कादम्बरीप्रणयिनो भूयांसः शुकनासाश्चोपहसन्ति बाणकविम् । यत्र च सहस्रशो विलसन्ति यथा तुलितधनदाः श्रीलास्तथा सुदामसहोदराः लक्षशो लक्ष्यन्ते भिक्षाशिनो रुक्षालकाःकन्थैकावरणा अशरणा रथ्याशायिनः शीतपिण्डितशरीराः आतपदाहकृष्णकलेवराः वर्षार्द्रतनवोऽतनुदुःखभाजो मानवाः । एव स्वर्ग-नरकयोः प्रत्यक्षनिदर्शनतामुपैति मुम्बापुरी । यत्र नवसुधारणाप्रणयिनां सर्वदैवोद्यमप्रवणानां जनानां नास्ति चेतसि धर्मबुद्धेरवकाशः, न वा देवप्रतिमानां गृहेऽवसरः, न च वर्णाश्रमविहितकर्मणामास्पदम्, नैव शुचित्वाशुचित्वकल्पनायाः पदम् । तेषां शुचित्वं फेनवटिकया ( साबण ) आत्मपूजैव देवपूजा, दयिताराधनमेव देवताराधनम् । तेषां मुखेऽग्निहोत्रं, खाद्यवस्तून्येव हवींषि भवन्ति । नगरेऽस्मिन् धर्मपथच्युतानां मुक्तहस्तं धनव्ययसमर्थानां नातिदूरे स्वर्गसुखम् । त्रिदिवखण्डायमानेषु विलास मन्दिरेषु सुधास्वादूनि लभ्यन्ते यथेच्छं भक्ष्यभोज्य-चोष्य-पेयानि । समासाद्यन्ते च भूलोकाप्सरसः । लुठितुमुपलभ्यन्ते सोपधानानि मृदुहंसतूलशयनानि।

परमधुना धान्यनियन्त्रणेन भोजनस्य पूर्वतश्चतुर्गुणितनैकलक्षजनाकीर्णतया स्थलस्य च दौर्लभ्ये जाग्रति धर्मग्रहग्रस्तानां शुचितादिकल्पनाकुलचेतसां बहुविस्तारेऽपि पत्तनेऽस्मिन् कुतो निवाससौकर्यम् कुतस्तमां चाहारव्यवस्था ।

प्रथमं मधुरवाणीसमुत्कर्षैकलक्ष्यतया नास्माकमुदपद्यतैषा चिन्ता चेतसि। धूमयानेन समासन्नायां मुम्बापुर्यां बलवदबाधत नो विचार एषः-केषांचित्परिचितानामपि दम्पतीमात्रसमावेशपर्याप्तं संकुचितं सदनं कथं वा गन्तव्यम्, भीकरमहर्घतासमये कथं वा तत्र भोक्तव्यमिति। एवमुद्विग्नचेतसां, किंचिदालोच्यमाने झटिति स्मृतिपथमागतं सुहृद्वराणां मान्यगुणानाम् श्रीमद्धुलीगपाद्याचार्याणां सुगृहीतं नामधेयम्। प्रसन्नं च मानसं सपद्येव। दूरतः समपसृता च चिन्ता। एते किल महानुभावाः बाल्येऽधीताम्नायसमग्रसंहिताः न्याय-वेदान्त-व्याकरण-मीमांसा-साहित्य-धर्मशास्त्र-स्मृति-पुराणाद्यनेकविद्यापारङ्गता अपि 'एम. ए.' इत्युच्चपाश्चात्यविद्यापदवीविभूषिताः। पाश्चात्यविद्याविलासिनोऽपि सनातनधर्मप्रणयिनः। सदाचारनिष्ठाः सदा पाठप्रवचनैकनिरताः। अकिंचना अपि दूरीकृतश्ववृत्तयोऽयाचितवृत्तयोऽपि बहून्पोषयन्ति विद्यार्थिनो गृहेऽन्न-वसनदानादिना, अध्यापयन्ति च शास्त्रग्रन्थम् साधु सत्कुर्वन्ति साधूनतिथीन्। सादरं सम्मानयन्ति सदाचारसंपन्नान्विद्यावतश्चागन्तून्निरन्तरम। पूर्वतः सौहार्दमव्याजमस्मासु दर्शयताममीषां महतीं कीर्तिमाकर्णितवन्तो वयं तेषामेव पावने सदने मासपर्यन्तं परममातिथ्यसुखं जामातृनिर्विशेषमन्वभवाम सोत्साहमरम्। एषां गृहभित्तयोऽपि वेदान्तश्रवणसुधयेयावानुलिप्ता नैर्मल्यमावहन्ति, किमुत सन्निहितजनमानसानि। सदनममीषां मानसमिव प्रसन्नम्। मधुरतरश्चाहारो व्यावहार इव। विद्योन्नता अपि विनयनता एते। अमीषां महाभागानां सद्भावनोद्दीपिना सहवासेन निरतिशयसुखप्रसवेन नवबोधोन्मेषिणा सरससंलापेन च धन्यमात्मानमाकलयन्तो वयमनयाम क्षणमिव मासमेकं स्वसमतोऽपि सुखविशेषभाजः। एषामेव निवासमहिम्ना मोहमयमपि धर्मेतरवातावरणमपि मोहमयीनगरमधुना धर्मजीवनायास्पदमभूदिति वचनं नातिशयोक्तिसीमानमास्पृशतीषदपि। भूयांसः सन्त्यमीषु समुज्ज्वला गुणमणिगणाः वर्णनीयाः। परम् आत्मस्तोत्रकथाविद्वेषिणाममीषां निर्भर्त्सनभिया प्रयासेन प्रतिबध्नीमः स्वयमेव पुरः प्रधावन्तीमपि लेखनीमियतैव।

तथा मुम्बापुर्यां सुरसरस्वतीगौरवेण मधुरवाणी प्रणयेन निष्कारणेनाऽस्मासु सौहार्देन वा ये महाभागा यदुपाकुर्वन् यच्च सदकुर्वन्, यच्च प्रीतिविशेषं प्रादर्शयन् तत्कृते तेषामुदारचरितानां सुगृहीतानि नामान्यनुल्लिख्य कृतज्ञतामप्रदर्श्य उपकारमनुनुस्मृत्य किंचिदपि वा सहजगुणाननुवर्ण्य नैव समाधत्ते चेतः, न वा सन्तुष्यत्यन्तरात्मा नापि विरमति लेखनी। इयदखिलं सरलं जातम्। परं तेषां गुणवर्णने समुचिताः शब्दा एव नोपलभ्यन्ते इति महती किलापत्तिरियम्। तथापि अपरिहार्यतया कांश्चन शब्दान्प्रयोक्तुमुद्युञ्ज्महे।

तरुणे वयसि वाक्कीलव्यवसायेन प्रथितयशसः, बुद्धचरितादिकाव्यानामाङ्गलभाषया विवरणपरिवर्तनादिना प्रदर्शितसुपर्वभारतीप्रेमाण, गुणलुब्धेन सर्वकारेण स्वयमेव क्रमेण प्रापितमण्डल (जिल्हा) प्रान्तवरिष्ठन्यायाधीशपदा गुणगरीयस्तया लोके उरवः श्रेष्ठा इति 'लोकूर' इत्यन्वार्थितोपाभिधाः श्रीनारायणरावमहाभागा महोच्चपदवीमारूढा अपि यद्विनयं यच्च सौजन्यं यच्च मधुरवाणीश्रेयःप्रणयित्वं प्रादर्शयन् तदितरासाधारणगुणलुब्धा मुग्धा एवाभूम वयं कृतज्ञताभारावनतशिरसः। साधारणे राजकीयकर्माधिकारे सामान्ये वाक्कीलव्यवसाये स्थिता अपि आत्मानमपरं राजानम् अन्यं वाचस्पतिं मन्यमानाः केचन आगन्तून् स्वागतशब्देनापि न प्रीणयन्ति। विदुषोऽपि नाप्यभ्युत्थानमाचरन्ति। न वा नमनाय संयोजयन्ति पाणियुगम्। नैवानमयन्ति शिरश्च। न केवलमियदेव। कुटिलयन्ति भ्रुवौ। तिर्यक्कुर्वन्ति दृशौ। ग्रन्थिलयन्ति मुखम्। बहुशो बहुत्रानुभूतमस्माभिरिदम्। परं महोच्चपदाधिष्ठितानामपि श्रीलोकूरमहाशयानामुदारां सरलां मदलेशविधुरां प्रणयबन्धुरां विनीतां च वृत्तिमालोक्य विस्मयेन स्तिमितं मनः। प्रमोदेन विकसितश्चात्मा कृतज्ञतया चावनतं शिरः स्वयमेव। उदितं च मुखेन तत्क्षणमेव "अहो धन्या मान्याश्चामी महाभागाः परमं श्रेयो लभेरन्" इति। 'न शब्दयन्ते पूर्णाः कुम्भाः' इत्याभाणकमपि स्मरणसरणिमुपगतम्।

ईदृश एव दुर्लभोऽनुभवो मुम्बापुर्यामपरोऽधिगतोऽस्माभिः। महाराष्ट्रे सप्ततारा (सातारा) नगरे तेजस्वितारायमाणं विद्वद्गजेन्द्रभूयिष्ठं तपोमहितं च गजेन्द्रगडं नाम प्रथितं कुलम्। यत्र सप्तपुरुषपर्यन्तमाकाशि प्रथितादृष्यवैदुष्य-भाजो व्याकरण-वेदान्तादिशास्त्रेषु नैकप्रौढग्रन्थनिर्मातारो महानुभावा जन्म-भाजो भुवमलञ्चक्रुः। तस्मिन्नेव वंशे समुदितमुक्ताफलायमानाः पूर्वजपरम्परा-गताद्बुद्धिकासारात् गृहीतप्रतिभासाराः सौशील्यादिगुणैराल्हादितबन्धवः अन्वर्थितनामधेयाः श्रीप्रल्हादाचार्यमहाभागा अल्पीयस्येव समये वाकील-व्यवसाये लब्धयशसो बुद्धिप्रभावेण कार्यक्षमतया च तरुणवयस्येव साधारण-जनदवीयस्या वरिष्ठन्यायाधीशपदवीदेव्या स्वयंग्राहसंगता विद्योतंते। एते अपि महाभागा अस्मत्कृते महान्तममूल्यं समयं व्ययमकुर्वन्। सौहार्देन महेच्छा इमे आत्मीयताबुद्ध्या वचसि मनसि च कोमलतां मधुरतां उदारतां च सममेवाविष्कृत्य न्यमज्जयन्नानन्दसागरे नः। मधुरवाण्याः श्रेयोवृद्धये अप्रार्थिता एव विशंत्रण रूप्याणां शतमेकं वितीर्य मार्गप्रदर्शकैरानन्दनिदानै-रनल्पैर्वचनैः प्रोदमाहयन्नस्मान्। प्रत्युपकर्तुमक्षमा वयमुत्तरोत्तरं श्रेयो विदध्या-लक्ष्मीपतिरमीषामिति प्रार्थयामस्तमां भगवन्तं भक्तवत्सलम्।

अहो मुम्बापुरीसौभाग्यम्। अहो सुरवाणीसमुत्कर्षोदर्कः। अहो मधुरवाण्याः श्रेयोगरिमा—यदत्र प्रान्तीयवरिष्ठन्यायालये न केवलमेकः नापि द्वौ, अपि तु त्रयो न्यायाधीशाः' सौजन्यप्रतिमा मूर्तिमद्विनया अमरवाण्यां निरतिशयं प्रेमाणं दधाना विलसन्ति महाभागाः। तेष्वमी राजद्गुणतया वा गुणिगणराजतया वा सर्वविषयेषु दत्तदृष्टितया च '**राजाध्यक्ष**' इत्यन्वर्थितनामधेया महाशयाः। त इमे मान्याः सुरवाण्यां तत्परिचारिकायां मधुरवाण्यां तत्संपादकेषु च यद्बहुमानं यच्च गौरवं यच्चात्मीयताभावनां प्रादुरकार्षुः तत्समुचितमेव महापुरुषतायाः, तदलङ्करणमेव श्रुतस्य, तन्मण्डनमुच्चाधिकारस्य च। तदन्यत्र दुर्लभं गुणसमवा-यमेकत्र समुदितमालोक्य विस्मयस्तिमितमासीन्मनः। तदेतैरुदारचरितैरपि साहाय्यविशेषदानेन नितरामधमर्णीकृता मधुरवाणी सौजन्यादिगुणवशीकृत-

चेतसो वयं च । उत्तरोत्तरं श्रेयोवृद्धिमपेक्षमाणा वहामो महतीं कृतज्ञतां नैकधन्यवादपुरस्सरम् ।

बहुरत्नायां मुम्बापुर्यां समुज्ज्वलतमं पुरुषाकारं रत्नमवलोकितमधिगतं च श्रीचिरंजीलालल्लोयालकाभिधम् । यच्च वदान्यमालिकायां मध्यतरलायते । प्रसूते चाभिमततरम् । अमी महोदाराः प्रतिमासं लक्षाधिकधनसम्पादका अपि दुरभिमानलेशविधुरा मदगन्धेनाप्यस्पृष्टाःसनातनधर्मप्रणयिनः सुरवाणी-प्रेमाणश्च। जगति विरला एव श्रीला दानशीलाः। विरलतराश्च विनयशालिनः। विरलतमाश्च धर्मानुरागिणः । तत्रापि विशेषतो दुर्लभाश्च देववाणीविषये अनणीयसीं प्रीतिं दधानाः । तेष्वेवायं धन्यतमः श्रीमान् श्रेष्ठी श्रीचिरं-जीलालल्लोयलकामहाभागः ।

मधुरवाण्या उत्कर्षाभिवृद्धये साम्प्रतं रूप्याणां शतं व्यतरदेवायम् । उत्तरोत्तरं सुरसरस्वत्याः प्रसारातिशयमाकांक्षन् प्रोत्साहितवश्च सन् ।

कुंजविहारी भगवान् श्रीचिरंजीलालमहोदयाय चिरंतनमायुरारोग्य-मखण्डितमैश्वर्यमविरतं अधिकाधिकमेव दद्यादित्याशास्महे ।

जगति कति वा न सन्ति धनिकाः पित्रार्जितं विपुलं धनं व्यसना-दिना जलधारावर्षं वर्षन्तो विषयैकलालसा देश–धर्म संस्कृति–भाषाद्यभिमान-गन्धविदुरा मानुषम्मन्याः । कति वा न वर्तन्ते स्वपराक्रमेण वा यया कया वा रीत्या प्रभूतं द्रविणं संपाद्याऽपि पूर्वोक्तानामेव पथमनुसरन्तः । परं त एव विरलतमा ये न्यायेन प्रयासेन च संपदमपारां समार्ज्य परोपकारार्थं देश–भाषाद्यर्थं च विनियुञ्जाना उदारप्रकृतयो महात्मानः । तेष्वयमन्यतमः श्रीमान् मुम्बापुरीवास्तव्यः के. एच्. कच्चूरमहाभागः । यः किल पूर्वम् अमेरिकादेश-मुपगतो वर्ण ( कच्चर् ) वाणिज्येन विश्रुतः सांप्रतं मुम्बापुरीमधिवसन् समा-सादितागणितधनं सद्व्ययेनोपयुङ्क्ते । अद्य संस्कृतपाठशालामुज्जीवय, श्वः अनाथालयानुद्घाटय, परश्वो वैद्यकग्रन्थान्मुद्रापय, परेद्युः संस्कृतभाषामुत्तेजय एवमादिभिः सुकृतैकफलैर्विमलकीर्तिकन्याप्रसवैः प्रशंसनीयैरभिनन्दनीयैरितर-श्रीलानुकरणीयैः सद्व्यापारैः सार्थकीकरोति जीवितं बहिर्जीवितं स्वापतेयं

चायमुदाराशिरोमणिर्महाभागः । सुरवाणीप्रेम्णैव मधुरवाणीमधमर्णामकरो-त्साधशतद्वयरूप्यकसाहाय्यवितरणेन वदान्यमूर्धन्योऽयं धन्यवादसहस्रमर्हत्येव। सानन्दमभिनन्दामस्तमिमेवं श्रेयःपरम्परामाशासानाः, इतः परमितोऽप्यधिकतरं सुरवाणीसमुन्नतिकर्मणि महतीमुदारतामाकाङ्क्षमाणा वयम् ।

एवं पंच सङ्ख्याका इमे महाभागा यथा मुम्बापुर्यामौदार्यप्रदर्शनेन मधुरवाणीश्रेयोवृद्धये अनुकरणीयमनुपममानन्देहतुं धनसाहाय्यमकुर्वन् तथा इतरे अपि रत्नायमानाः सहस्रशो विभ्राजमाना महोदाराः श्रीला भूषयन्त्येव मुम्बापुरीमित्यत्र नास्ति सर्वथा विप्रतिपत्तिः । प्रसंगे पुनस्सर्वे अनुपमेन साहाय्येन मधुरवाणीमचिरादेव स्वोद्दिष्टसाधनेन कृतार्थयेयुरित्याशास्महे वयम् इत्यलम् पल्लवितेन ।

---

# संस्कृतमहाविद्यालयविषये किञ्चिद्विवेचनम्

आगामिनि माघमासे वा अनन्तरीयवत्सरचैत्रे वा विग्रहवतामिव यम—नियमानाम् मूर्तिमतामिव ज्ञान—भक्ति—विरागाणां सशरीराणामिव सौशिल्यौ-दार्यादिसद्गुणानां सदेहानामिव तपस्तेजसां श्रीमदुत्तरादिमठाधीश्वराणां महतः साहाय्यविशेषेण श्रीपण्ढरपूरक्षेत्रे यत्संस्कृतमहाविद्याशाला विद्यातेजोभासुराणां प्रखरब्रह्मवर्चसानां कुमाराणां जननार्थं यत्प्रतिष्ठापनाप्रसववेदनामनुभवति, तत्र सुखप्रसवार्थं बालानां चिरायुरारोग्याभिवृद्धये च चिकित्सकनाम लब्ध्वा किंचिद्विवेचयितुमिच्छामः । विवेचनेयं कदाचित्केभ्यश्चिन्न रोचेत । परं सरलया बुद्धया भाविहितैककाङ्क्षया निष्कल्मषेण चेतसा च प्रामाणिकस्वमताविष्करणे न कमपि दोषं पश्यामः ।

सर्वत: संस्कृतविद्याविषये सांप्रतमनादरस्तिरस्कारश्च दरीदृश्यते सर्वत्र । नैकविद्यापारङ्गतमपि सदाचारसंपन्नमपि जनसम्मर्दतो दूरस्थितमपि संस्कृतविद्वांसं वीथ्यां धूमयानशकटे संसदि कदाचित् पौराणिककथाप्रसङ्गे चलच्चित्रपटमन्दिरे च आधुनिका:सुधारणाधुरीणा: पाश्चात्यविद्याबलेन महोच्चकोटिमारूढं मन्यमाना मध्यविद्यालय ( हॉयस्कूल ) महाविद्यालय ( कॉलेज ) विद्यार्थिन: पदवीधराश्च पशुक्रीडनमंदिरे ( सर्कस ) विदूषकपात्रमावहन्तमिव विलोक्य हसन्ति हन्तापहसन्ति च स्वैरम् । शिवाजी—तानाजी—प्रतापसिंहादिवदात्मानं देशोद्धारकम्मन्यमाना अमी संस्कृतपण्डितमाकलयन्ति देशस्य समाजस्य न केवलं निरुपयुक्तं हेयं प्राणिनमपितु: धर्माचरणेन संस्कृतविद्याध्ययनेन च समाजोन्नते: कण्टकं विघातकं च । पाश्चात्यदुर्गुणैकानुकरणपौरुषभाजोऽमी शीतदेशे समुपकारके गोष्णदेशेऽपकारकेण महाव्ययसाध्येन वेषेणालङ्कृत्यात्मानं स्वत्स्वेदा: अन्त:क्लिश्यमाना अप्यात्मानं धन्यम्मन्यमनसोऽल्पव्ययसाध्यसुलभ-हितकरवेषेण भूषितमपि संस्कृतज्ञमसंस्कृतमनागरिकमित्यवहेलयन्ति । आत्मनो दौर्बल्यप्रदर्शनायैव नारीवत्सीमन्तधारिण: स्वाभिमानशून्या एते हिन्दूसंस्कृतेर्ध्वजायमानां विदुषां शिखां तापकरीं प्रखरां वैश्वानरशिखां मन्वते । एवं संस्कृतविद्याया नितान्तं ह्रासमये समये नितरां शोचनीयायां दशायां संस्कृतविद्यापुनरुज्जीवनार्थं महाविद्यालयस्थापनवार्तामाकर्ण्य कस्य संस्कृतप्रणयिनोऽन्त:करणं न मज्जेदानन्दसागरे । कस्य वा आर्यसंस्कृतिप्राणस्य नयनयुगलान्न प्रवहेत्प्रमोदबाष्पसरित् । कस्य वा सनातनधर्माभिमानिनो मुखारविन्दान्न निस्स्यन्देयु: साधुवाद—धन्यवाद—प्रणामवादमधुबिन्दुसहस्राणि । एवं स्थिते महाविद्यालयस्थापनविषये विप्रतिपत्तिकारी पशु रसुरो वेत्यत्र न संशीति: । परं महाविद्यालयस्वरूपविषये संभवेयुर्बह्व्यो विप्रतिपत्तय: । तत्रास्मदीयाशयाविष्करणं सांप्रतमसांप्रतं न मन्यामहे संस्कृताभिमानदृष्ट्या संपादकीयकर्तव्यतापेक्षया च महाविद्यालयस्य समुद्दिष्टकार्यसाफल्यदृशा यशस्वितादिशा च ।

महाविद्यालयो नाम बहुभिनैकशास्त्रनिष्णातैर्विद्वद्भि: शताधिकैश्च विद्यार्थिभि: सङ्घटित: । केवलं विदुषां मेलनेन वा गुरुविरहिणां विद्यार्थिनां सङ्घटनेन व विद्यालयत्वम् । किन्तु उभयो: सान्निध्येनाध्यापनाध्ययनादिनैव ।

संप्रति संस्कृतमहाविद्यालयेऽध्यापयितुं प्राचीनविद्यागौरवेण स्वोच्चकुलाभिमानेन पारमार्थिकफलैकदृष्ट्या च निस्स्वार्थगन्धं समधीतनैकशास्त्रा उपलभ्यन्ते तत्र तत्र विबुधोत्तंसाः । न तत्र संशयः । परं विद्यार्थिनां विषये एव समुपस्था-स्यति महीयान्प्रश्नः प्रयासश्च । दिने दिने पितृपरम्परागतस्थावरसंपदि ह्रसि मानमापद्यमानायां, राजाश्रयवैधुर्ये जागरूके, शून्यतामुपगते जनसाहाय्ये वर्धमाने च सकलसांसारिकधान्यादिवस्तुनिचयमूल्ये जठरपिठरपूरणचिन्ता संतापयति विरक्तशिखामणीनपि सन्न्यासिनः । किमुत सांसारिकान् ।

अस्यामवस्थायामपत्यवत्सलः को वा पिता मततमनुभूयमानदारिद्र्यदुःखः संस्कृतविद्याध्यापनेन सुतानुपजीवतः कर्तुं द्रष्टुं चापेक्षेत । उदरपोषणचिन्ता केन किं वा न कारयति बलात् । अवलोपयति धर्मबुद्धिम् । प्रवर्तयत्यधर्मे । अपहस्तयति कुलाभिमानं । निस्सारयति पूर्वजगौरवम् । तापयति तपः । अनयैव दुरन्तया चिन्तयाऽऽक्रान्ताः पितरोऽनिच्छन्तोऽपि अन्तःक्लिश्यन्तोऽपि परिस्थित्यधीना अनुजानन्ति प्रायो धर्मभ्रंशकरीमन्यविद्यामध्येतुम् । कदाचित्कुलाभिमानिनः स्वविद्याबहुमानेन स्वसंस्कृतिप्रणयेन च परवशीकृतचित्ताः प्रसवितारः स्वपूर्वजार्चिताः पावना देवप्रतिमाः शालिग्रामाश्च माप्नुवन् जलसमाधिम्, मागच्छेयुश्च भाण्डापणं पूजाभाजनानि, माभूवंश्चापणे विक्रेयवस्त्वावरणानि परम्परागतपवित्रपुस्तकानि इति सहजोद्दीप्तभावनया भाव्यनर्थकल्पनाचित्रदर्शनव्य-थितचेतसा च निर्धनतादुःखं सानन्दमङ्गीकृत्याऽपि केचन प्रावर्तयन्महात्मानः संस्कृतविद्याध्ययने तनूजान् । ते कुमाराः बाल्ये किंचिदधीतशास्त्रग्रन्था अपि यौवनदशामापन्नाः परितः परिस्फुरत्पाश्चात्यविद्याविद्युल्लेखाक्षणिकप्रभा-प्रतिहतचक्षुषः सहसा शास्त्राध्ययनपथाद्दूरीभूताः अवगणय्य पितृप्रार्थनां, तिरस्कृत्य महतीं कुलमहतीम्, अनालोच्यैव स्वैनेव कुलप्रतिष्ठामाशंसानां बन्धूनां मनोव्यथां, पाश्चात्यविद्याविलासिनीप्रणयाराधनां कुर्वन्ति सोत्साहम् । परमना-सादिततत्प्रसादा हन्त उभयभ्रष्टाः तुन्दिलायन्ते विद्याकुशा अपि । ईदृशी खलु संस्कृतविद्यायाः सांप्रतिकी दशा । एवं सति प्रतिष्ठासितविद्यालयार्थं विद्यार्थिसं-ग्रहप्रश्नो जटिलः संवृत्तः । काश्चन पाठशालाः महाविद्यालयाश्च महत्यामपि गुरुसंपत्तौ सत्यामपि सुग्रासभोजनादिव्यवस्थायां विद्यार्थिविरहेणैव नामशेषता-मयासिषुरिति जानन्त्येवाभिज्ञाः । तद्यावद् मास्तु नाम विलासपर्याप्तं धनम्, परं

गौरवेणाशनवमनेकसाधनं धनं लब्धुमाशा विश्वासश्च नोदेति तावत्संस्कृतविद्या-ध्ययनाय दुर्लभाः खलु विद्यार्थिनः । हन्त तादृशा अपि विलसन्ति पुण्यात्मानो ज्ञानैकलालसा धर्मैकजीविताः कुलैकाभिमानिनोऽन्तेवासिमणयो धननिरपेक्षाः । ये विना शाकमन्तरा घृतम् ऋतेऽपि दधिदुग्धादिकाद् ओदनं केवलमोदनं भक्षयित्वा सच्छिद्रवसनं परिधायापि प्रसन्नवदनास्सदा तृप्तान्तरा स्तेजस्विनः । प्रातस्तेषां द्रष्टव्यं मङ्गलं मुखकमलं वन्दनीयं चरणयुगलं, । शिरसा सादरं धारणीयश्च पावनश्चरणरेणुः । परमीदृशाःकति वोपलभ्यन्ते । लक्षेष्वेकः । अतः विद्यालयेन समं मेधाविविद्यार्थिसंग्रहार्थं पर्याप्तवित्तनिधिसंग्रहस्यापि विचारः करणीय एव । तत्र निधिसंग्रहे महीयानूढो भागः श्रीमदुत्तरादि-मठाधीशपूज्य श्रीगुरुचरणैः । इदानीमवशिष्टो भागः शिष्यैः संपन्नैरधिकं, सामान्यैर्यथाशक्ति पूरणीय एवावश्यम् । शिष्यवर्गे प्रमुखैर्लौकिकैरेव निधिसंग्रह-कार्ये प्रवर्तितव्यम् । ते तु महाशयाः प्रतिपत्तनं प्रतिग्रामं प्रतिगृहं च गत्वा महाविद्यालयकृते धनमर्थयंतु तत्तद्योग्यतानुसारम् । एवं कृतेऽल्पीयस्येव समयेऽभीप्सितद्रव्यसंग्रहः स्यादेव । धर्मप्रणयिनो जना दास्यन्त्येव मुक्तहस्तं पवित्राय विद्यादानकर्मणे । परं स्वार्थनिरपेक्षं दुर्लभाः कार्यकर्तारः । यदि प्रथिताः कार्यकर्तारः मन आदधीरन् किंचित्कालं वा अस्मिन् कर्मणि, तर्हि सर्वमपि सुकरं स्यात् । एवं संगृहीते निधौ भाविपोषणविश्वासेन स्वयमेवाविशन्ति विद्यार्थिनोऽहमहमिकया महाविद्यालयमित्यत्र नास्ति सन्देहबिन्दुरपि ।

इदानीं महाविद्यालयशिक्षणविचारमपि किंचित्प्रस्तोतुमभिलषामः । अधुना एकाङ्गतः तर्कवेदान्तादिशास्त्रशिक्षणेन व्यवहारेष्वनुपयुक्ता अगौरव-भाजो भवन्ति छात्रा इति न खलु नानुभूतमिदं । अधीततर्का न जानते वेदान्तरहस्यम् । नाप्याकलयन्ति मीमांसाम् । न वा विदन्ति व्याकरणगन्धम् । साहित्यशास्त्रं त्वेषां रण्डागीतमेव । साहित्यपरिषदेषां मदिरागारायते । एवमेव वेदान्ति–वैयाकरणादीनां दशा । एते स्वप्नेऽपि नालोकयन्ति सकलशास्त्रमूलं भगवन्तमाम्नायपुरुषं विनोपनिषदम् । न स्मरन्ति स्मृतीः । न परामृशन्ति पुराणानि । न प्रयतन्ते वेद-पुराणरहस्यमवगन्तुम् । न वाऽयासयन्त्यात्मानं धर्मशास्त्रालोडने । एवमितरसंस्कृतविद्यास्वेव येषामनादरस्तिरस्करणीयताबुद्धिश्च तेषां पाश्चात्यतत्वज्ञानादिविषयज्ञानं परिशीलनं च शशविषाणायितमेव ।

किंचाधुनिकैः सर्वैरपि पश्चिद्भिरत्यादृता विवेचनशक्तिरश्रुतपूर्वैवामीषाम् । श्रुतपूर्वा च सोत्प्रहासमपहसनीया भवति । अत एतादृशपण्डितेषु शिक्षणे च नैवादरः संजायते लोकानाम् । अनादरे च ततोऽर्थाप्राप्तिः । अर्थाभावे च विद्यार्थिशून्यता । तया च महाविद्यालयस्यानुद्दिष्टसिद्धिः । अतः पौरस्त्य-पाश्चात्यविद्यानिष्णातैः श्रीमहान्याग्रगोपालाचार्यप्रमुखैः पण्डितव्याघ्रैः समितिमेकामुभयपण्डितभूयिष्ठां निर्माय स निर्णेयः शिक्षणक्रमः, येन सर्वाङ्गशिक्षणसंपन्ना विद्यार्थिनः सदुपन्यासेन विविधविषयपरिशीलनेन नवशोधाविष्कारेण च समाजेनादृता संस्कृतविद्यागौरवं पुनरुज्जीवयेयुः सर्वतः इत्यलं विस्तरेण ।

---

# विमर्शवेदिका.

---

विमर्शपीठं नाम नूनमदण्डाधिकारं निर्वेतनमपरं पवित्रं न्यायासनमेव । यत्र सौहार्दप्रयुक्तपक्षपातस्य नावसरः, न वा द्वेषदूषितपूर्वग्रहस्यास्पदता । पीठमिदमनुकूलमतप्रदर्शनेन यथा ग्रन्थकृतामुत्तेजनावहं तोषकरं, च तथा प्रतिकूलाशयप्रकटनेन कटुतमं कदाचिदध्यारूढस्य कण्टकमयतामापद्यते । परं तदुभयमविचार्यैव पक्षपरिग्रहशून्यया दृशा यदात्मना प्रतिभायते तदवश्यं वक्तव्यमेव निस्सङ्कोचं विमर्शकेन ग्रन्थशुद्धिकृते इति सर्वप्राज्ञसम्मतविषयमादर्शतया पुरतो निधायाधुनाऽऽरुरुक्षामो विमर्शपीठम् । तदत्र निर्दाक्षिण्यसत्यप्रतिपादनेन न केनापि विमनायितव्यमिति प्रथममेव निवेदयामः ।

**मुकुन्दलीलामृतनाटकम्**—नाटकरूपमपत्यमिदं चि. चू. पं. विश्वेश्वरवैद्यराजप्रसूतत्वेन प्रसिद्धमपि साधारणसूक्ष्मदृशा अथवा स्थूलदृशाऽपि विचार्यमाणे एतत्प्रणीतप्रसन्नहनुमन्नाटकमिव पितृद्वयजन्यतया सदोषमिति स्पष्टमेव द्योतयत्यात्मनो मिथो विरुद्धैर्नैकैर्धर्मैः ।

प्रसन्नहनुमन्नाटकस्य प्रथमार्धभाग इवाऽस्मिन्नपि नाटके समप्रयो: प्रथम-द्वितीयाङ्कयोस्तथा तृतीये पत्रत्रयपर्यंतं यादृशी सरसा सरला निरवद्या हृदयङ्गमा पदमैत्रीसङ्गता भाषाशैली दृश्यते, यादृशी चानल्पप्रमोदकल्पनक्षमा सहृदय-हृदयहारिणी कल्पनावैखरी गोचरीभवति दृशोः, तदुत्तरभागे न केवलं न तादृशी, किन्तु तल्लेशोऽपि नास्पदं भजतीति निवेदयितुं दुःखाकरोति नश्चेतः। प्रथमभागो यथा स्वीयैर्गुण-रीति-संविधानकालङ्कारध्वनि-पात्रसन्निवेश-पदलालित्यप्रमुखैर्दृश्यकाव्यजीवातुगुणैर्हठादेवाकर्षति रसिकजनचेतांसि, सवेगमान्दोलयति मूर्धानम्, परवशयत्यात्मानम्; निमज्जयत्यानन्दसागरे विस्मारयत्यन्यविषयान् न तथेतरो भाग इति स्फुटमेव प्रतीयते वाचकैः। तदेतन्निदर्शनार्थं वाचकजनविनोदाय चोदाहरामः पूर्वोत्तरविभागयोः कांश्चिदंशान्।

देवक्या सह कंसकारागृहे निगडितस्य वसुदेवस्य पराधीनस्वदेशाभिमानिभिरनुभूयमानदुर्दशावेदिनीयं सूक्ति—

“स्वदेशे न प्रेम प्रकटितमहो मातृधरणी—<br>
समुद्धारे यत्नो न खलु विहितो दुस्सहशुचाम्।<br>
प्रजानां स्वातन्त्र्येऽकरवमहमान्दोलनमलम्<br>
कुतः कारागारातिथिरहमिदानीं समभवम्॥”

पतिप्रेमानले निजसुखान्याहुतीकुर्वतीनां साध्वीनां विचारसरणिमाविष्करोति साधुतरमेवं देवकी—

“नाथ मम मन्दभागिन्याः पाणिग्रहणपापादीदृशो दुःसहः प्रसङ्गः समापन्न इति चेखिद्यते चेतः। वाराणसीनगरे स्वर्गतुल्ये श्वशुरगृहे कुमारेण प्रियतमया राजपुत्र्या च यथेच्छं सुखमनुभवत आर्यपुत्रस्याहमेवाभवं दुःखकारणम्। अधुनापि प्रार्थये—परेषां स्वस्य च दुःखभोगायैव जातां मां विहाय पुनः काशीनरेशप्रासादे दयिता—सुतसमागमसुखमनुभूया. इति। मत्कृते कुतो वाऽनुभूयते नरकयातनेयम्। यत्र कुत्रापि आर्यपुत्रसुखेनैव मे सुखम्—

तृणं नु जानन्ति पतिव्रता निजं सुखं पतीनां कुशलैककाङ्क्षया ।
सदा सतीनां प्रणयोऽतिनिर्मलो नचञ्चलः स्वार्थपराङ्मुखः खलु ॥ ”

अहो ! कियती वा उदात्तता-भारतीयभामिनीनाम् ।

श्वशुरगृहनिवासिनं पुरुषं परिभवति पाणिगृहीतिर्विशेषतः पितृधनमत्ता लब्धसुतेति सर्वानुभवसिद्धं विषयमावेदयति वसुदेवः—

“ काशीनरेशगृहगमनं पुनस्तन्नन्दिनीसङ्गमनं चासंभावितमेवास्मिन् जन्मनि । पितृसंपत्तिदुर्मदायाएतस्या न कदापि विस्मरेयं मर्मविदारि वचः ।

श्वश्रूसद्मनि सर्वदा निवसति प्रेयस्यहो मानिनी
तं दूरादवधीरयत्यतितरां प्रेम्णा न संभाषते ।

तत्रापि स्वकतातभूरिविभवोन्मत्ता ततोऽपि स्फुटम्
जाते वा तनये ततोऽपि तरुणावस्थामुपेते तु किम् ।

‘ कुत्राऽपि जातस्तव शत्रुरुर्व्याम् ’ इति दुर्गादेव्या वचनमुपश्रुत्य चिन्ताग्रस्तस्यापि कंसस्य श्रीकृष्णदशावतारसूचिका दर्पोक्तिर्जनयति चमत्कृतिं चेतसि—

वार्धौ मज्जतु वा गिरिं वहतु वा धत्तां धरित्र्या धुरम्
दंष्ट्रां दर्शयताद्दधातु परशुं सेतुं च बध्नातु वा ।
सिन्धौ पत्तनमातनोत्वटतु वा दिग्वाससा सैन्धवम्
नन्वारोहतु न त्यजामि कुहचित्तं तं वीरभीरुं हरिम् ॥

रमणीरमणीयवेषधारिण्याः पूतनायातुधान्याः सौन्दर्यमदप्रलपितमिदं कौतुकमपूर्वं जनयति—

रम्भा सम्भ्रमसम्भृताऽद्य विगलद्दम्भा भवेत्सत्वरम्
मीनाक्षी बत मे न काऽपि गतिरित्याक्रोशते मेनका ।

रूपोन्मादितिलोत्तमाऽपि सतिलं पाथोऽञ्जलिं काङ्क्षति
दर्वारं प्रथितोर्वशी त्यजति सा खर्वान्यगर्वं क्षणात् ।
वामाचाररतं करोमि सततं तं वामदेवं मुनिम
योगभ्रंशवशादनिघ्नकरणं केलीशुकं वा शुकम् ॥
माद्यन्मन्मथमारुताविलहृदं कुर्वेऽद्य वा मारुतिम्
भीष्मस्यापि तनोम्यहं प्रशिथिलां भीष्मां प्रतिज्ञामपि ॥
अस्मद्दैत्यकुलं स्वभावसरलं सम्मोहयन् मोहिनी—
वेषेणामृतपूरितं च कलशं याऽपाहरत्कैतवात् ॥
प्रायश्चित्ततयाऽद्य तं मुरहरं नन्दात्मजच्छद्मिनम्
तादृग्वेषधरा स्तनं विषघटं संपाययामि द्रुतम् ॥

ईदृशानि नैकानि सन्ति हृदयङ्गमानि पद्यानि । परं स्थलसङ्कोचादि-यतैव विरम्यते ।

अथापरभागस्य दिग्दर्शनं क्रियतेऽधुना सिक्थेनैव सर्वमोदनं परीक्षितं भूयादिति—

मथुरायां श्रीकृष्णं प्रति कुब्जाया वचनमिदं—
"सुखधाम निराम निकाम प्रभो त्वविलम्बितया मम यातु गृहम् ।
अवदस्य मनोहररूपपरं त्वयि लीनमना विफला हि भृशम् " ॥
" वैकुण्ठगमनोन्मुखं—' रमा—वैकुण्ठवासिन्य ऊचुः—
संकूर्दय पापार्कसुतान्तराले संमोह्य कालीयकमानसं मे ।
स्वपादघातेन विनीय पूतं नृत्यन्तमीक्षे नु कदा भवन्तम् ॥"

एवमादि ।

यदि पूर्वभाग इवोत्तरो भागः परिशोधितः परिष्कारितोऽभविष्यत्तर्हि प्रस्तावनालेखकाशयानुसारं नूनमद्य श्वो वा पठ्यपुस्तकतासंभावनामभजिष्यन्नाटक-मिदम् । नीरसता निर्गुणता च न तादृशं वैरस्यमापादयतो यथा व्याकरणादि-

दोषाः। अतो द्वितीयमुद्रणे वा नाटकेन्दुरयं दोषाकरतां परिहायात्मनो गुणततिविमलज्योत्स्नया रसिकाननुरञ्जयेदिति बलवदाशास्महे।

**निर्भयम्**—कर्णाटकभाषामयं साप्ताहिकं पत्रमात्मनो नामानुरूपं निर्भयं राजकीयादिविषयान्विवेचयति। जम्बूखण्ड (जमखंडी स्टेट) स्थितमपि कर्णाटकस्यैव भाषायाः संस्कृतेश्च संवर्धनाय यतते। भविष्यवार्तया तोषयति तदिच्छून्। भटुमयैर्वोधप्रदैःपद्यैराल्हादयति चेतः। कथाभिरनुरञ्जयति रासिकान्। अस्य तु संपादकः श्रीमान् काखण्डकीरामाचार्यः प्रथितलेखकः। सर्वथा पत्रवत्सोऽयं चिरायुर्भूत्वा निर्वहतु देशकार्यमित्याशास्महे।

---

# श्रीश्रीसुब्रह्मण्यमठाधीश्वराः श्रीमच्चरणाः

श्रीमत्परमहंसेत्यादिविरुदावलिसमलंकृताः श्रीसुब्रह्मण्यमठाधीश्वराः श्रीविश्वज्ञतीर्थश्रीमच्चरणा, स्वाश्रमोचितधर्मानस्खलितमनुतिष्ठन्तः "पादैः पुनंतः पृथिवीं दर्शयन्तो हरेः पदम्। धूतदुस्समयध्वान्ता आदित्या इव गां गताः" इत्युक्तक्रमेणैव तत्रतत्र संचरंतः पावयंति जनसमूहानिति तु विदंत्येव सद्वैष्णवाः। एते किल महाभागा गीर्वाणवाणीसेवापरायणाया मधुरवाण्याः श्रेयोवृद्धये रूप्यकशतप्रदानेन समनुगृह्णन्तः संरक्षकतामवलम्ब्य प्रोत्साहयंतीति परां कोटिं प्रमोदगिरिशिखरस्य समारोहद् मधुरवाणीति निवेदयितुं महान्नः सन्तोषः। एते किल महानुभावा यदा सुप्रसिद्धां मद्रासनगरीं राजधानीमलमकुर्वन् स्वसन्निधानेन तदानीं तत्रत्या आस्तिकजना यतिवरेण्यानां वर्णनीयान् गुणगणान् अवलोकयंतः प्रमोदभरभरिता अभिनन्दनपत्रिकां समार्पयन् बहुमानपुरस्सरम्। तत्रत्यान् श्लोकान् वयमत्रोदाहरामः।

एवमांध्रदेशे सुप्रसिद्धे गुण्टूरपत्तनेऽपि तत्रत्या आस्तिकजना आर्पयन् श्रीचरणसन्निधौ भक्तिपुरस्सरं स्तुतिकुसुमांजलिम्।

---

श्रीमत्परमहंसपरिव्राजकाचार्य—यमनियमाद्यष्टाङ्गयोगनिरत—श्रीमद्द्वैतसिद्धान्तप्रतिष्ठापनाचार्य—श्रीमद्विष्णुतीर्थाचार्यशुभसम्प्रदायप्रवर्तक—श्रीसुब्रह्मण्यमठाधीश्वर—श्रीमद्विश्वज्ञतीर्थश्रीश्रीचरणानां सन्निधौ मद्रपुरवास्तव्येनास्तिकजनसमुदायेन समर्पिता

# अभिनन्दनपत्रिका.

यतिवर भवदीये पादपाथोजयुग्मे भ्रमरनिकरलीलामाश्रयन्तः पतामः ।
तदुपगतपरागैस्त्वं विधायापरागानमृतरसमिमान्नः पाययस्वादरेण ॥ १

श्रीमन्मध्वाचार्यवर्यावतारक्षेत्रे पुण्ये पाजके लब्धजन्मा ।
सुब्रह्मण्ये विष्णुतीर्थार्यपीठमध्यास्से त्वं भक्तलोकस्य भूत्यै ॥ २

कौमारे त्वं प्राप्य सन्यासयोगं साक्षान्मुक्तेर्द्वारमक्षय्यपुण्यम् ।
श्रीशं व्यासं विठ्ठलं श्रीनृसिंहं भक्त्याभ्यर्चन् कस्य नाभ्यर्चनीयः ॥ ३

कुमारधाराभिधतीर्थसङ्गात् पूतं स्वतः क्षेत्रवरं पुरैव ।
विश्वज्ञतीर्थेन विशुद्धिभाजा त्वया यते पूततरं विभाति ॥ ४

भिक्षो, त्वमेव ननु दण्डिपदाभिधेयो यं नोपसर्पति भयेन कदाप्यधर्मः ।
यं चाश्रयन् सकल एव च सज्जनौघः सम्मोदते सपदि शत्रुभयाद्विमुक्तः॥५

विद्यासिन्धुसमाह्वयं यतिवरं संयोज्य नैजे पदे
भक्तानुग्रहकाङ्क्षया चिरमटन् क्षेत्राणि तीर्थानि च ।
सुब्रह्मण्यमिदं करोषि निखिलं क्षोणीतलं पावनं
धन्यैषा यतिवर्य तत्रभवतः सन्यासयोगात् क्षितिः ॥ ६

पूर्वाचाररतिः कदध्वविरतिः श्रीमध्वशास्त्रादृति-
र्दैवाराधनपद्धतिः श्रितजनप्रीतिः परा संयतिः ।
निर्मायाध्वगतिः प्रियोक्तिभणितिः प्रेमप्रसन्ना स्थितिः
सर्वोऽसौ त्वदुपाश्रितो गुणगणः प्रीणाति चेतांसि नः ॥ ७

गुणैः समाकृष्य निजोपकण्ठं बध्नन्नपि त्वं जनतां समन्तात् ।

बन्धाद्विमुक्तिं गमयन्ननादेरचमत्कृतिं कामपि पुष्यसि त्वम् ॥ ८

कालेयकालेऽद्य करालरूपे विजृम्भिताधर्म कथाप्रसङ्गे ।
भिक्षो त्वया ब्रूहि सतां समीड्यः कुतः समासादित एष धर्मः ॥ ९

कालाज्ञाशवर्तिना हतधियाऽधर्मेण मर्माविधा
संविद्धो गुरुशोकभारविनतः कृत्तात्मचित्तः स्वयम् ।
सुब्रह्मण्यमरण्यजालजटिलं मन्ये तपोऽर्थं गतो
धर्मः सख्यमलब्ध तत्रभवतः शान्तात्मनो योगिनः ॥ १०

मन्ये भटैः कश्चिन्नृपस्य विशीर्णगात्रस्तीर्थे क्वचित् पिपतिषुः स्ववधाय धर्मः ।
विश्वज्ञतीर्थपतितो निजदैवयोगाद्दक्षामगात् सुमनसां मनसः प्रहृष्ट्यै ॥ ११

रक्षन् नित्यं स्वीयसीमां समन्तात् कर्मन्दीं त्वं धर्मसिन्धुर्विभासि ।
अस्तव्यस्तोऽपास्तनैजप्रकाशो यस्मिन् धर्मः सुप्रतिष्ठश्चकास्ति ॥ १२

ज्ञानादिरत्नोत्पत्तिधामा यमीन्द्रः पौरस्त्यस्त्वं धर्मसिन्धुर्मतो नः ।
संसाराब्धेर्ज्ञानसूर्यास्तहेतोराचक्षाणो व्यक्तमेवापरत्वम् ॥ १३

मन्ये धर्मं गोप्तुकामेन धात्रा भूयः स्रष्टुं विष्टपेऽस्मिन् कृतादौ ।
सुब्रह्मण्येऽधर्मदूरे वनान्ते भिक्षुव्याजाद्धर्मसिन्धुर्व्यधायि ॥ १४

चातुर्मास्ये दीक्षितो मद्रपुर्यां दीप्तं कुर्वन् भानुवत् त्वं स्वभानुम् ।
दूरीकुर्वन्नन्धकारं समन्तादुन्निद्रत्वं नो हृदब्जान्यनैषीः ॥ १५

यस्तम्भादुदभूद्रुषा विदलयन् दैत्यस्य दम्भं पुरा
सोऽयं सर्वगतोऽप्यणोरणुतरः श्रीशो नृसिंहः प्रभुः ।
सुब्रह्मण्यमठोदरे प्रतिवसन्नभ्यर्च्यमानस्त्वया
भक्तौघान् अवतो नितान्तकृपया प्रह्लादयत्वादरात् ॥ १६

त्वपादपद्मयुगलं पुरुषार्थहेतोरेते वयं सकुतुकाः परितः श्रयामः ।
नारायणस्मरणसङ्कलितात्मशक्त्या संवर्धयस्व भगवन् भृशमाशिषा नः ॥१७

नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ।
नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव योगिन् ॥ १८

मद्रपुरम्,

---

# संस्कृतसमाचारः

बेंगळूरनगरे श्रीचामराजेंद्रसंस्कृतमहाविद्यालयो नाम विद्यादानकर्मणि सुप्रसिद्धएव विद्योतते । एतस्मिन्नेव सप्तम्बरे मासे द्वाविंशे तारके वार्षिको-त्सवः संवृत्तः । मैसूरराज्ये विद्याविभागमंत्रिणो टी. सी. एम्. रायन् एम्. डी महाभागा आध्यक्ष्यपदमलमकुर्वन् । तन्महाविद्यालय-प्रधानकार्यकारिणीसमितेरध्यक्षा राजधर्मप्रवीणा दिवान्बहदुर श्री. पी. महादेवय्या बी. ए. बी. एल्. एम्. एल्. सी महाभागाः स्वागतभाषणमकुर्वन् । तदुभयभाषणसारं मधुरवाणीप्रियपाठकेभ्यः समुपहरामो वयम् ।

## चिरमभिवर्धतां यदुसन्तानश्रीः

मान्या मंत्रिवर्याः महिला महाशयाश्च वार्षिकोत्सवेस्मिन्नभ्यागतानां वः सर्वेषां हृत्पूर्वकं स्वागतेनाभिनन्दनार्पणं मे महतः सन्तोषस्य कारणम् । अस्मन्महाप्रभुमंहाराजैर्विद्याधिकारिसाचिव्यपदे नियोजिताः श्री. टी. सी. एम्. रायन्महाभागाः प्रथममिदानीमेव महाविद्यालयमिममागमनेन भूषयंतीति मंगलप्रसंगेऽस्मिन् स्वागतेनाभिनन्दनान्यर्पयितुमें महान् सन्तोषो जायते । बेंगळूरनगरनिवासिनां चिरपरिचिता इमे महाभागा यतो नागरिकाणां सार्व-जनीनेषु सेवाक्षेत्रेषु सर्वतोमुखीं सेवामनुष्ठाय सर्वेषामपि परमादरस्नेहविश्वा-सानां भाजनान्यभूवन् । सुविशुद्धा सरला वृत्तिरहैतुकी जनसेवाकांक्षा निष्पक्षपाता बुद्धिः कर्तव्यनिष्ठता इत्यादयो गुणगणा एवैतान् उच्चस्थानम-धिकारपदमलंभयन् इत्युक्तिर्नातिशयोक्तिकोटिमाटीकते ।

अस्मदीयामभ्यर्थनामनुरुध्य महाभागा इमे स्वागमेनन प्राहर्षयन्नस्मा-निमर्थे महाविद्यालयीना कार्यकारिणीसमितिः अतितरां कृतज्ञतामावहति ।

अखिलस्यापि भारतस्य भारतीयायाः संस्कृतेश्च मूलाधारभूता सुर-सरस्वतीरूपा संस्कृतभाषा सर्वेषामपि अत्यावश्यकी इति महत्त्वबुध्या महामहिमशालिनो महाराजा महाविद्यालयमिमं प्रतिष्ठाप्य प्रचालयन्तो विद्या-दानकर्मणि प्रशंसनीयचरिताः सन्तीति तेभ्यो भक्तिपूर्वं कृतज्ञताविष्करण-मस्मदवश्यकर्तव्येषु प्रथमतया परिगण्यते किल.

विद्यार्थिनः प्रोत्साहयितुं सर्वविधानि सौकर्याणि सम्पादयितुं पारि-तोषकान् समर्पयितुं तांस्तानन्यानुपायान् कल्पयितुं सफलानाचरितुंच कार्य-कारिणीसमितिर्निधिसंग्रहे तत्पराच वर्तते।

कार्यकारिणीसमित्या निर्णीतानुपायान् कार्यरूपेणावतारयितुं बद्धपरि-कराश्च महाविद्यालयप्रधानाध्यापका धरणेन्द्रय्यामहाभागा निरलसा उत्साह-शालिनश्च सेवया अनया प्रसिद्धिमुपगताः सन्त्येव । संस्कृताभ्यासविषये जनमनसामाकर्षणाय नैपुण्यमावहंतिचेमे । संप्रति तत्र तत्र संस्कृतेः संस्कृतस्य च संवर्धनाय महाभागा अत्युदारा दृष्टिमर्पयन्तीति महद्भाग्य-मिदमिति संभावयामो वयम् । एवमेव प्रतिदिनमधिकाधिकमभिवर्धमाना जन-जागृतिस्संस्कृतभाषामत्यादरणीयां संस्कृतिंच सर्वत्रापि सुप्रसार्य आदर्शरूप-तामाधिगच्छतु इत्येव खल्वभ्यर्थनास्माकम् ।

संप्रति १७,६०० रूप्याणि सार्वजनिकमहाशयेभ्योऽधिगतानि धनरूपेण पुस्तकरूपेणच प्राप्तानि एतेषु च १३,६०९ रूप्याणि मैसूर-सर्वकारसविधे शाश्वतनिधिरूपेण निहितानि । केचन महाभागा १,१०० मूल्यानि पुस्तकानि महाविद्यालयीनग्रन्थभाण्डागारार्थे व्यतरन् । एतान्निधौ येये महोदाराः साहाय्यकारिणश्च तेषां भावचित्राणि समारंभेस्मिन्प्रदर्शितानि सर्वेभ्यो महाभागेभ्यो धन्नवादपुरस्सरमाभिनन्दनान्यर्पयामहे । इतरे च महनीया उदारचरिता महाभागा दातॄननुकुर्वन्तो निधिसंवर्धनार्थे साहाय्य-माचरन्तः कीर्तिभाजो भवन्तु इत्यभ्यर्थयामहेच ।

समितेरभ्यर्थनामनुसृत्य सर्वकाराधिकारिणो विद्यार्थिनां विद्यार्थिनीना-मत्युपयोगाय पंचसहस्ररूप्याणि व्ययीकृत्य सुंदरमेकमुपहारमन्दिरं निर-

मापयन्निति धन्यवादार्हाश्चेति विषयेस्मिन् विद्याविभागाधिकारिभ्यो मि. एम्. सुल्तानमोहियुद्दीनमहाभागेभ्यो नैकवन्दनानि समर्पयामश्च.

इदानीमत्यवश्यमपेक्षणीयानि तानितानि सर्वकारसाहाय्यलभ्यानि बहून्यभ्यर्थनीयानि वर्तंते। तानि सर्वाणि मंत्रिणो महाभागाः सफलानि- विधाय कीर्तिभाजो भवन्तु (अवसरेऽस्मिन् विद्यालयोपयुक्तविविध वश्यकर्तव्य- कार्याणि न्यरूपयन्).

अत्युचाया भारतीयसंस्कृते रक्षणं संस्कृतभाषामूलमिति श्रीस्वामी- विवेकानन्दमहाभागाः सर. एस्. राधाकृष्णन् इत्यादयः सुप्रसिद्धाः तत्वज्ञा महाभागाः सर्वे समस्वरमभिप्रयंति। अस्मदीया महाप्रभवो मैसूरमहाराजाः संस्कृतभाषाभिवर्धने संस्कृतिसंरक्षणेच बद्धादरा महाविद्यालयकृते बहुधन- व्ययेन सुंदरं मन्दिरं निर्माय बहूपाकुर्वन्नित्यत्र नास्ति सर्वथा संशीतिः। तथापि अवश्यमेपेक्षणीयमन्यच्च तत्तत् कर्तव्यं न्यूनमवशिष्टम् परिपूर्य विद्या- र्थिवृन्दमनुगृह्णंतु इत्यभ्यर्थयामहे.

पुनरेकदा वार्षिकोत्सवार्थे समभ्यागतान् सर्वान् सानन्दं सोत्साहं स्वागतवचनैरभिनन्दयाम इत्यलम्.

---

## अध्यक्षपदमलंकुर्वतां मंत्रिवर्याणाम्

# भाषणसारः

श्रीमंतः स्वागताध्यक्षाः महादेव्यामहाभागाः समुपस्थिताः महिला महाशयाश्च श्रीचामराजेंद्रसंस्कृतमहाविद्यालयस्य वार्षिकोत्सवप्रसंगे भागग्रह- णावसरोऽयममन्दानन्दसन्दोहहेतुरिति मन्ये। यदद्य मंगलतरेऽस्मिन् प्रसंगे अध्यक्षपदालंकरणाय विद्यालयीनकार्यकलापावगमनाय च यदवकाशो दत्तः एतदर्थे एतत्संस्थायाः कार्यकारिणीसमितेरध्यक्षान् महाभागान् सदस्यांश्च

सर्वान् अभिवादयामि. सबहुमानम् । महाविद्यालयस्य कार्यभारनिर्वहणाय प्रभावशालिनां गण्यानां महाशयानां समितिरेका संस्थाया उत्कर्षाभिवृद्धये श्रद्धाभक्तिपूर्वं कार्यकरणाय दत्तावधाना बद्धपरिकराच वर्तते इति जानन् नितान्तमानन्दतुन्दिलोऽस्मि । समितेरध्यक्षाश्च महाभागाश्चिराय मे प्रियसुहृदो विविधैर्गुणगणैर्वृद्धा अपि मानसिकचैतन्येन महता उत्साहेन च नवतरुणा अनुकरणीयचरिता आदर्शपुरुषाश्चेति न तिरोहितमत्रत्यानाम् । एतादृशानाम् महोदाराणां सहायसम्पदं मार्गदर्शित्वं च लब्ध्वा संस्थेयं श्लाघनीयभाग्यभूषितेत्यहं मन्ये ।

उदाराश्रयदातॄणां भावचित्रप्रदर्शनमुत्तेजनकरमितरेषाम् भविष्यत्येव भारतीयप्राचीनसंस्कृतावभिमानिनः सर्वे पोषकाः प्रशंसनार्हमौदार्यमाविष्कुर्वंतः अनुकुर्वंतु इतीतरानभ्यर्थये ।

संस्थानां विशेषतो विद्याभिवृद्धिहेतूनां श्रेयोमूलं शाश्वतनिधिसंग्रहः । एतदर्थे सफलप्रयत्नान् समितेरध्यक्षान् सदस्यान् प्रधानाध्यापकांश्च मनःपूर्वकं धन्यवादपूर्वमभिनन्दयामि सहस्रशोऽहम् ।

एतन्महाविद्यालयस्था विद्यार्थिनो देहारोग्यविषयमनुपेक्षमाणा विविधव्यायामक्रीडापरायणा इत्ययं महतस्तोषस्य विषयः । तथाचात्र विद्यालये क्रमबद्धरीत्या प्रवर्तमाना आशुभाषणस्पर्धाचर्चाकूटादयो विद्यावतां भाषणानि च इतरानुकरणीयानि गमनार्हाणिच । एतेन विशालदृष्टयो विकसितबुद्धयो लोकोपकारशीलशालिनश्च भवंति विद्यार्थिन इत्यत्र नास्ति संशयलेशः ।

आयुर्वेदशास्त्राभ्यासविषयमुद्दिश्य पर्यालोचयितुं उपसमितिरेका निर्मितेति जानामि । आयुर्वेदोद्धाराय सर्वेपि भारतीयाःप्रयतमाना दृश्यन्ते । तथा उपसमितेः पर्यालोचनं सूक्तमेव भवेत् । तेन आयुर्वेदशास्त्रे पाण्डित्यमभ्युपेयुषामानुकूल्यं उत्तेजनकारि च भविष्यति ।

संस्कृतभाषायां निगूढमुपबृंहितं अमूल्यं विज्ञानं विविधसाहित्यगतमनुपमं सौन्दर्यं आध्यात्मतत्त्वोपबृंहितेषु ग्रन्थेषु विद्योतमाना उदात्तभावना इत्याद्यनेके विषयाः ,सहस्रशो जागतिकविद्वन्मणीनामप्यादरणीया वर्तते ।

अतो गीर्वाणभाषायाः सर्वेष्वपि विविधविभागेषु यथा अभ्यासविशेषो विद्यार्थिनां स्यात्तथा अवश्यं प्रयत्न आवश्यकः । सर्वविधं प्रोत्साहनमप्यत्यावश्यकम् । विद्यालयोयं बद्धादरः स्वोद्दिष्टसाधने इति गरीयान्मे संतोषः इति एतदर्थं पुनःपुनरहं कार्यकारिणीसमितिसदस्यानध्यक्षान् प्रधानाध्यापकादींश्च धन्यवादपुरस्सरमभिनंदन् विद्यालयोऽयमाचन्द्रतारकं दिव्ययशोभास्वरान् विद्वद्विद्यार्थिपुंगवान् उत्पादयन् विभ्राजतामित्याशासे ।

विद्यार्थिनश्चेमे दिव्यसुखभाजो भवंतु इति प्रार्थयेय भगवन्तमित्यलम् ।

---

## तेजसां हि न वयः समीक्ष्यते

सुभाषितमेतत्सार्थकीकुर्वंतः कति न विद्यन्ते साम्प्रतं मेधया स्वचरणेन च तेजस्विनो बालब्रह्मचारिणः सन्यासिनो वा । ईदृशा एव स्वभावते महात्मानो विपन्नं समाजे धर्मं राष्ट्रं किं बहुना निखिलमेव जगतीतलमप्यत्र प्रत्यासन्नविनाशं चोद्धर्तुं क्षमंते स्वमहिम्ना । परं दैवदुर्विपाकात् कालप्रभावाद्वा तादृशानि समुज्ज्वलानि विरलविरलान्येव दृश्यंते क्वचित्क्वचित् । प्रायस्तादृशा एव सन्यासिनो बहुलीभूता दृश्यन्ते ये किल भोगैकमात्रैकद्रव्यार्जनैकव्रता दम्भाचारपरायणाः परवंचनैकचातुरीभाजः शास्त्रविमुखा ज्ञानविधुरा वैराग्यांकुरोधरा वेषमात्रेण पूज्यतामासादयंतः संचरंति गृहमेधिनामप्यतिशयंतो लम्पटा अलं पटं काषायं वसानाः समार्जितं धनं सत्कर्मस्वनुयुज्य कोशे सम्यक् न्यासेन सन्यासिपदवाच्याः । अहो विचित्रा गतिः कालस्य । यदीदृशानपि पूर्वार्जितधनकनकसम्पन्नानपि सन्यासिनः पूजयन्ति मानयन्ति स्वैरमर्पयन्ति धनं भोजयन्ति सेवन्ते च पामरा अन्धश्रद्धया सुधियिताः प्रतिष्ठानिष्ठाः । परं नाद्रियन्ते विदुषः प्राणात्ययेऽपि अपरिलक्ष-

सदाचरणव्रतान् बहुकुटुम्बान् दरिद्रान् गृहाश्रमिणः। तदास्तां नाम प्रकृते इदानीं ये विरलतमाः सत्यमेव सन्यासिनो विभांतन्ते तेष्वेवामी उडुपीपेजावरमठाधीश्वराः श्रीविश्वेशतीर्थचरणाः। इमे महात्मानः पंचदशवर्षदेशीया अपि पंचाशद्वर्षं साध्यं विपुलं ज्ञानं शास्त्रे साहित्ये चाधिगतवन्तो ज्ञानभक्तिविरक्तिभाण्डागारायमाणानां भण्डारगिरिकर्मन्दिवृन्दारकचरणानामन्तेवासितामुपगम्य सन्ततमधीयन्ते साभिनिवेशं ज्ञानामृतपाने अतृप्तान्तराः । अपरोऽयं विशेषोऽसाधारणो दृश्यते यत्सर्वशास्त्रोपकारकमपि नीतिमार्गप्रवर्तकमपि वैराग्योपष्टम्भकमपि व्यवहारचातुर्यजनकमपि साहित्यं यदितरैः शास्त्रैकव्यसनिभिर्विद्वद्भिर्विभवस्तागीतमिति पामरजनैकमनोरंजकमिति तिरस्क्रियते उदास्यते दूष्यते तदेव सर्वगुणसाहित्यं साहित्यमात्मसात्कृतं कुशाग्रधिषणैस्सरसकवितापटुतरैरमीभिर्महानुभावैः परीक्षितगुणलोभेन । एते बालसन्यासिनोपि स्वैरं नैकदेशसंचारप्रगल्भया कीर्तिकामिन्या सरसकवितावनितया स्वयंवृताः ।

तर्के कर्कशवक्रवाक्यगहने या निष्ठुरा भारती
सा काव्ये मृदुलोक्तिसारसुरभिः स्यादेव मे कोमला ।

एषा प्राचीनोक्तिरेतानेव लक्ष्यीकरोतीव । मधुरवाण्यां प्रेमातिशयेन साहाय्यविशेषं व्यदधुरिति न वयं प्रकटीचिकीर्षामो यत्तदपेक्षयैव वयमियती वर्णनामैश्वरीमवालम्बामहीति मा भूदपवादस्य नवावतार इति । गुणैकलुब्धा वयं अल्पे वयसि प्रदर्शितप्रखरमेधाप्रसारान् यथार्थव्रतिनो महाभागान् सानन्दं सविनयं सधन्यवादपुरस्सरं च प्रणामांजलिसहस्रेणाभिनन्दन्तोऽमीषामायुरारोग्याभिवृद्धये ज्ञानकर्मनिष्पादनशक्तये च प्रार्थयामो भगवंतं नन्दनन्दनं बालमुकुन्दम् ।

## श्रीश्रीमत्परमहंसेत्यादिबिरुदालंकृतश्रीमत्पेजावर-मठाधीश्वरश्रीविश्वेशतीर्थश्रीमच्चरणाः

सत्यध्यानमुनित्रयीतनुवचोरश्मिस्फुरच्छेमुषी
श्रीभण्डारगिरिव्रतीश्वरविधोः पीयूषसारैर्भृशम् ।
प्रज्ञाभानुचयैः प्रजावरकसद्विश्वेश चन्द्रोपलाद्
भूयात्स्यन्ददमन्दधी रसझरी स्वानन्दसन्दायिनी ॥

पं. गलगलीशुकाचार्याणाम्

अग्रिमाङ्के पूरणीया समस्या

## भारतमिदं भूयात्स्वतंत्रं कदा

फेब्रुवरीअंतिमतारकादर्वागेव प्रेषयन्तु । दोषदूषिताः कविता न प्रकाश्येरन् । अत्युत्तमाः कविताः परितोषकं लभेरन् । कविताप्रेषणावसरे एव आणकाष्टकमूल्याः शुल्कचीटिकाः ये प्रेषयेयुस्तेषामेव कविताः परीक्षणीया भवेयुरिति.

सम्पादकः

# द. भा. चतुर्थं संस्कृतसाहित्यसम्मेलनम्.

दक्षिणभारतीय संस्कृतसाहित्यसम्मेलनमिदं चतुर्थं सुवर्णपुरम् इति सुप्रसिद्धे (सोलापुर) नगरे दिशाम्बरीयांतिमदिनद्वये (२०।२१ तारकयोः) महता उत्साहेन वैभवेन च प्रावर्तत । श्रीहरिभाईदेवकरणमाध्यमविद्यालये डॉ. मुळेसभामन्दिरे विविधचूतपल्लवध्वजतोरणालंकृते मंगलसुस्वरवाद्यघोषभूषिते सुरसरस्वतीप्रशंसिपुरुषघोषजनसमाजशोभिते सभाप्रारंभो मंगलगीतेन प्रवृत्तः पेशवेइत्युपाव्हो दामोदरात्मजः शंकरकविर्यदरचयदिमानि गीतानि । शारदास्तवनं स्वागतपद्यं सम्मेलनं विराजतामिति च पद्यमेकमासीत्. ततो नगराध्यक्षा रा. ब. नागप्पाअण्णाअवटुळपूरकरमहोदया आरंभभाषणमकुर्वन् । तत्र च संस्कृतभाषाया महत्वमभ्यासस्यावश्यकत्वं संप्रति विद्यमानां दशां तत्परिहारोपायाश्च स्वल्पैरेव वचोभिरुत्तमतया न्यरूपयन् । स्वागताध्यक्षा एम्. ए. पदवीधारिणो गोविंदपरशुरामपटवर्धनमहाभागाः सर्वानभ्यागतान् स्वागतवचनैरानन्दयन् । ततः कार्यदर्शी कुद्दालरामचंद्रशर्मा मुंबापुरीवास्तव्यानां भारतीभुवनप्राध्यापकानां सर्वतंत्रस्वतंत्राणाम् श्रीमाधवाचार्याणां सभाध्यक्षपदमलंकर्तुमभ्यर्थनारूपं प्रस्तावमुपास्थापयत् । मधुरवाणीप्रधानसम्पादका अभिनवकालिदासेत्याद्युपाधिसमलंकृताः पण्डितगळगळीरामाचार्यास्तथा बुर्लीश्रीनिवासाचार्यास्तर्कतीर्थनीलकण्ठशिवाचार्याः पुण्यपत्तनस्थ, गी वा. ब. सभाध्यक्षाः पं. रानडेपुरुषोत्तमशास्त्रिणो विजयपुरस्थाः पण्डितशिरोमणय उडुपीसीतारामाचार्याश्च अध्यक्षपदायोजनमन्वमोदंत । ततः श्रीमाधवाचार्या अस्खलितया गंभीरया च वाण्या भाषणमन्ववाचयन् । त्रयाणामपीमानि भाषणानि मधुरवाण्या अग्रिमांके प्रकाश्येरन् । ततो मध्यान्हे विषयनियामकसमित्या निर्धारिताः संस्कृतोपकारका अनेके प्रस्तावास्तैस्तैरुपस्थापिता बहिरंगाधिवेशने अविवादमेव सर्वे सर्वैरनुमोदिता निर्णीता एव । "संस्कृतमेव सार्वत्रिकं संघटनामूलं" इत्यस्मिन् विषये श्रोतृमनोहरा चर्चा विद्वद्वरैः प्रवर्तित

सर्वानपि सभास्तारानमन्दानन्दसागरे न्यमज्जयन्। तत्र भागग्राहिषु पुण्यपत्तनस्था गीर्वाणवाग्व्यवहारवाचस्पतयो वाटवेकेशवरावडॉक्टर पी. एच्. डी. महाभागा मीमांसाशास्त्रपारावारपारंगमा विविधशास्त्राब्धिमन्थनमन्दरायमाणाः सरसास्खलितभाषणनैपुण्येन गीर्वाणगुरोरवतरणभ्रममुत्पादयंतः पाटणकरोपाह्वाः सुब्रह्मण्यशास्त्रिणो महाभागा, विविधविचारोदारवाक्यसंभृतामरतरंगिणीमवतारयितुं प्रवृत्ता अपरपुरुषोत्तमा इव पुरुषोत्तमशास्त्रिरानडेमहाभागाश्च त्र्यंबकशास्त्रीआपटेमहाभागाश्च गण्यतया समदृश्यन्त ।

ततश्च रात्रौ पिपीलिकाया अप्यवसरमनुत्पादयंतः सहस्रशो नरनारीकुमारकुमारीजरठजरत्यादयो नागरिका आपूरयन् स्वागमनेन सभामन्दिरम् । तदा माध्यमविद्यालयीनाः केचन विद्यार्थिनः कविकुलगुरोः कालिदासस्य कृतिषु अनर्घ्यरत्नायमानमभिज्ञानशाकुन्तलमभिनीय परमानन्दतुन्दिलानकुर्वन् सामाजिकान् । सप्तस्वप्यंकेषु भागं कंचिदेवाभिनयंतोपि समग्रनाटकदर्शनसौख्यमुदपादयन् सभ्येषु । सभ्यगाभिनेतृभ्यः पुण्यपत्तनस्थगीर्वाणवाग्वर्धिनीसभाधिकारिणः डॉ. गोकर्णमहाभागाश्च पारितोषकमदुः । एवं द्वितयदिवसे अपि विविधानि मनोरंजनकार्याणि संस्कृतमहत्त्वावेदकसंवादादीनि बालिकाभिरनुष्ठितानि । काश्चन गद्दीबंधुभिश्शिक्षिता बालिका नर्तनकौशलं प्रादर्शयन् । मेघदूतनृत्याभिनयः प्रेक्षकांतरंगाण्याकर्षयत् । तन्नृत्याभिनेतृभ्यो मधुरवाणीसंपादकाः पारितोषकमयच्छन् । एवं गायनवादनादिकार्याण्यपि शास्त्राचितगट्टीबंधुकृतानि मनोहराण्यभूवन् । द्वितीयदिवसे संस्कृतप्रचारोपायानुद्दिश्य भाषणानि अभूवन् । तेषु एम्. पी॰ वालीमहाभागा व्याकरणकोविदा गणेशशास्त्रीशेण्डेमहाभागा डॉ. गोकर्णमहाभागाः तर्कतीर्थश्रीनीलकण्ठशिवाचार्याश्च प्रमुखा आसन् । केचन संस्कृतोपयोगिनः प्रस्तावाश्च निर्णयमापादिता बहिरंगाधिवेशने । गतवत्सरे विजयपुराधिवेशनावसरे घटनासमितिरेका चतुर्थसम्मेलनावसरे पुरस्थापयितुं निर्मिताऽऽसीत् । तदुपसमितेरध्यक्षा विजयपुरवासिनो वाणिज्यव्यवसायप्रसृतयशसः कंकणवाडीअनंताचार्यमहाभागा

मंत्रिणो व्याकरणवेदांतशिरोमणयस्सुरसरस्वतीसेवाबद्धपरिकराः पं. उडुपी-सीतारामाचार्याश्च घटनानियमावलिं विलिख्य सभायाम् सन्निहिता आसन्। श्रीकंकणवाडीमहाभागाः पुरतोऽमण्डयन् विविधविचारपुरस्सरं सभया स नियमावलिरंगीकृतः। ततस्तदनुसारेण द. भा. सं. सा. सम्मेलनस्य कार्य-प्रवर्तनाय कार्यकारिणीसमितिरेका अत्यावश्यकी इति तस्यां च अध्यक्षोपाध्य-क्षकार्यदर्शिसदस्याश्च एते आवश्यका इति बुर्लीश्रीनिवासाचार्याः समाया-मुपास्थापयन् तथा पूर्वोक्तनिर्णीतनियमानुसारेण केन्द्रकार्यालयो विजयपुरे आस्तामिति निर्धारितः। ततश्च डॉ. के. ना. वाटवेमहाभागाः सोलापुरीय-यकार्यकर्तॄन् तत्कृतोत्तमव्यवस्थातिथ्यदिकार्यनैपुण्यमभिवर्णयंतः सधन्यवाद-पुरस्सरमभ्यनन्दन्। ततोध्यक्षमहाभागानां समारोपभाषणमभूत् विसर्जिता च सभा। प्रस्तवा घटनानियमावलिश्चाग्रिमांके प्रकाश्येत। कार्यकारिणीसमिति-रित्थम्।

१ श्रीमंतः सर्वतंत्रस्वतंत्राःश्रीमाधवाचार्याःभारतीभुवनम् मुंबई सम्मेलनाध्यक्षाः

२ का. का. समितेरध्यक्षाः श्री. अनंताचार्यकंकणवाडी बी. ए. एल्एल्. बी. वकील विजापूर.

३ उपाध्यक्षौ—प्रो. गो. प. पटवर्धन एम्. ए. विवेकवर्धिनीहायस्कूलदक्षिण हैद्राबाद डॉ. के. ना. वाटवे पी. एच्. डी. पुणे एस्. पी. कॉलेज.

कार्यदर्शिनौ. संस्कृतसाहित्यभूषणं बुर्लीश्रीनिवासाचार्यः मधुरवाणीसंपादकः बेळगांव.

वेदांतव्याकरणशिरोमणिर्विद्वान्उडुपीसीतारामाचार्यःवेदांतप्र-बोधिनीविद्यालयः विजापूर.

सदस्याः पं. पुरुषोतमशास्त्रीरानडेअध्यक्ष गी. वा. व. सभा पुणें. पं. व्याक-रणकोविदगणेशशास्त्रीशेंडे पुणे. डॉ. बी. आर. गोकर्ण एम्. बी.

बी. एस्. पुणे संस्कृतसाहित्यरत्नं पं. गळगलीरामाचार्याः मधुरवाणी· प्रधानसंपादकाः बेळगांव. पं. तर्कतीर्थनीलकण्ठशिवाचार्याः बेळगांव संस्कृतसाहित्यसुधाकरा एम्. पी. वाली एम्. ए. महाभागाः बेळगांव. पं. वाचस्पतिगुण्डेरावहरकारे डि. जज्ज संस्थान गद्वाल पं. व्याकरण-विद्वान् श्रीकृष्णस्वामीअयंगार बेंगळूर पं. शंकरशास्त्री मोझोळकराः सोलापूर पं. कुद्दालरामचंद्रशास्त्रिणः सोलापूर गं. गो. परिचारकाः वकील सोलापूर पं. गळगलीपंढरीनाथाचार्यः मधुरवाणीसहसंपादकः विजापूर गुं. ज. मंगलगीमहोदयः विजापूर.

अन्येषामावश्यकानां प्रवेशने समितेरधिकारो दत्तः। पंचमसं.सा सम्मेलनार्थं गद्वालसंस्थाने प्रधानन्यायाधीश्वरा हरकारेगुण्डेरावमहाभागा बहुादरपूर्वकमामंत्रयन्निस्यतःएतदामंत्रणं अंगीकृतमावदेयन् साभिकाः।

---

# विद्वद्वराणामभिनन्दनम्

श्रीमान् व्याकरणस्थापको नैकविरुदालंकृतः श्रीरामेश्वरदेवस्थान-संस्कृतमहाविद्यालये यशस्वी प्राध्यापकः पंडिरत्नंमधुरानगरवास्तव्यः कवि-कुलशेखरमणिः के. एस्. कृष्णमूर्तिशास्त्री कोचीनमहाराजेन **पण्डितराज** इति बिरुदार्पणेन सम्मानित इति श्रुत्वा नितांतं सन्तुष्यामो वयम्। प्रिय-सुहृदयं मधुरवाणीप्रणयी गीर्वाणवाणीचरणपरिचर्यापरायणः स्थाने सम्मानित इति. उभाभ्यामपि सानन्दं धन्यवादान् समर्पयामहे.

---

सुप्रसिद्धे वाराणसीक्षेत्रे राजकीयसंस्कृतमहाविद्यालये प्राध्यापका ग्रन्थालयाध्यक्षा भूतपूर्वामरभारतीसम्पादकाः कविकुलमूर्धन्या विद्वद्वरा नारायणशास्त्रिखिस्तेमहाभागा वत्सरेऽस्मिन् सार्वभौमसर्वकारेण महामहोपाध्याय-पदवीसमर्पणेन सम्मानिता इति प्रमोदस्य परां कोटिमधिरूढा वयं सहस्रशो धन्यवादान् वितरन्तः समभिनन्दामस्तमाम् । नैकग्रन्थनिर्माणेन चिराया-ध्यापनपवित्रकर्मणा सुरसरस्वतीसेवातत्परा महाभागाः स्थाने सम्मानिता इत्यर्थे सार्वभौमसर्वकारमप्यभिनन्दामः ।

---

# जयहिन्दसेनाधिकारिणामभिनन्दनम्

दौर्भाग्यचक्रेण पारतन्त्र्यमहागर्ते परिवर्त्यमाने अस्माकं भारतदेशे स्वातंत्र्यसम्पादनार्थं सप्तपंचाशदुत्तराष्टादशखिस्तशतके सैनिकयुद्धानन्तरं न केनापि सशस्त्रसांघिकसमराय प्रयत्नः कृतः । सहजमेतत् किल यत्परतंत्रता-मुपगतें राष्ट्रे परकीयस्वार्थसाधकशिक्षणप्रभावेण संजायते प्रजानां मनोवृत्ति-र्दुर्बला स्वाभिमानशून्या विलासलोलुपा मिथः कलहप्रिया साहसपराङ्मुखी स्वतंत्रसुखकल्पनाविधुरा च । तेन भरतखण्डमिदं चत्वारिंशत्कोटिप्रजापूरित-मपि अल्पैरेव परकीयैर्निश्शंकं शास्यते निर्घृणं पीड्यते निर्भयं त्रास्यते निस्संकोचं सर्वस्वं लुण्ठ्यते निर्दाक्षिण्यं बलात् क्रियते निर्व्रीडं निपात्यते अशनवसनादिवैधुर्यव्यसनेषु । परं दुःखपरम्परासहनस्यापि सीमा अस्ति । तदतिक्रमे किं वा न कुर्यात् प्रक्षुब्धा जनता । बलात् पदाहतः अचेतनोपि कन्दुकः पुनः समुत्पतत्येव. किमुत सचेतनः । सर्वतः प्रतिबद्धद्वारो मार्जा-रोपि प्राणसंकटे निर्विचारमुज्जिहीते कण्ठग्रहाय निरोध्दुः । किमुत मानवः ।

तादिदं राज्यमदान्धैर्नालोच्यते। आलोचितेपि प्रजासु प्रतीकारशक्तिवैधुर्य-कल्पनया समुदासते निर्भयम्। परमन्तःस्फुरन् स्फुलिंगः अनुकूलसामग्र्यां संपन्नायां समुज्वलः प्रखरज्वालासहस्रैर्दहत्येव समंतात्। तच्छमनाय जल-सेकादिना कृतेपि प्रयत्ने सशेषतामुपगतः पुनःकालान्तरे प्रकटयिष्यत्येवात्मनो भीषणं स्वरूपम्। तदेतस्य निदर्शनं श्रीसुभाषसेनापतिना संघटितं स्वतंत्र-सैन्यमेव। तदेतस्य धैर्योदात्तचरितं जानन्त्येव सर्वे। स्वातंत्र्ये अभिलाषः प्रयत्नश्च श्लाघनीयावेव गुणौ "नवैर्मानवैः। परं परकीये राज्ये तदेतावेव महादोषतया परिगण्यते। तदनुसृत्य कारागृहबद्धा शहानवाजप्रभृतयः जनताप्रक्षोभभयेन वा भाव्यनर्थकल्पनया इतरस्वजातीयस्वतंत्रराष्ट्रतिरस्कार-शंकया वा स्वत एव चिरवित्रासनाजनितया मानुषतासुलभया व्रीडया वा भाविनि विश्वव्यापिनि समरे साहाय्यविशेषलाभाय बलाधिक्याय सम्पत्तये च स्वार्थदृष्ट्या वा केनापि वा अनिर्वाच्येन कारणेन राजमण्डलेन सुविचारेण मुक्ता इति सन्तुष्यामस्तमाम्। धीरोदात्तचरितान्सैन्याधिकारणः सानन्दम-भिनन्दामः। समये समुचितौदार्यप्रदर्शने कृतमतिं राजमण्डलं च प्रशंसामो वयम्।

न्यायालये अभियोगविचारणावसरे स्वातंत्र्यकांक्षि सैन्यमिदं सर्वथा न दण्डार्हमिति प्रतिपादनेन यशस्वितामापन्नो वाकीलसार्वभौमो मेधावि-मूर्धन्यो भुलाभाईदेसाईमहाभागोपि परस्सहस्रान् धन्यवादानभिनन्दनान्यर्हतीति तमपि वयं सानंदं प्रशंसामइति।

------ ----

# संस्कृतप्रणयिषु साग्रहमभ्यर्थना

अखिलभारतभूदेवीकर्णताटंकायमाने कर्णाटके विविधराजकीयादि-आन्दोलनकेंद्रकर्मक्षेत्रभूते नैकमहाविद्यालयालंकृते वेणुग्रामे (बेळगांव) दशवत्सरेभ्यः प्राक् पण्डितप्रवराः संस्कृतसाहित्यभूषणादिविरुदालंकृता बुर्लीश्रीनिवासाचार्याः संस्कृतसाहित्यरत्नादिविरुदालंकृताः पण्डितगलगलीरामाचार्याश्च मधुरवाणीं नाम संस्कृतभाषामयीं मासपत्रिकां प्रारभ्य महर्घतादिना अतिभयंकरे अपि समये विघ्नशतैराहन्यमाना अपि महता उत्साहेन प्रकाशनतत्परा एवेति नितान्तमभिनन्दनार्हास्संति । सरलया सरसया च सरण्या महत्त्वपूर्णैर्विविधैर्विषयैश्च संभृता मधुरवाणी संस्कृतपत्रिकाप्रपंचे अग्रगण्यस्थानमलभत इत्युक्तिर्नातिशयोक्तिकोटिमाटीकते । संप्रति स्वतंत्रमुद्रणालयाभावेन पराधीनतया सत्यपि उत्साहातिशये विद्यमाने सरललेखसंग्रहे साहाय्यदानदत्ताश्वासनेषु परश्शतेषु ग्राहकेषु अहमहमिकया पुरतस्समापतत्सु नियते समये प्रकाशयितुमसमर्थाः चिन्तासन्तानतान्ताः क्लेशमनुभवंतीति न परोक्षोयं विषयः । सर्वेष्वपि मुद्रणालयेषु अक्षरयोजकवैरल्यं कार्यभारश्चातिशयः इत्येवानुभवो दृश्यते । प्रसंगे अस्मिन् स्वतंत्रमुद्रणालयमन्तरा न नियतकाले प्रकाशनं सुशकं स च तादृक् धनसंग्रहमन्तरा न सिध्द्यतीति जानंत्येव सर्वे । तथा च प्रसंगानुसारेण मधुरवाण्या विषये नैकाः सुधारणाः चिकीर्षंति संपादकाः । माध्यमविद्यालयेषु महाविद्यालयेषु परीक्षार्थमपि वा संस्कृताध्ययनसक्ता विद्यार्थिनः परस्सहस्रातिगा विद्यंते । तेषु सर्वेषु अधिकाधिका रुचिर्यथा संस्कृतविषये उत्पद्यते तथा परीक्ष्यग्रन्थाध्ययनसौकर्यं परीक्षोत्तरणे साहाय्यं च यथा भवेद् एतदर्थं च तदुपयोजितवेदशास्त्रकाव्यनाटकादिविषयेषु लेखान् प्रत्यंकं प्रकाशयितुमभिलषंति । तदर्थं लब्धयशसः प्राध्यापकान् अध्यापकांश्च तत्तद्विषयेषु लेखान् प्रेषयितुमायोजयंश्च । अनादिकालतः किल संस्कृतभाषा जगति आदरणीयामार्यसंस्कृतिमुत्पाद्य संवर्ध्य संरक्ष्य दिक्षु विदिक्षु प्रसार्य अनंतमविस्मरणीयमुपकारमकरोत् । भारतेतु भिन्नभिन्नप्रांततया विभक्तेषु सर्वेष्वपि देशेष्वपि भाषादिषु निविष्टेन संस्कृतांशेन विषयोयं विज्ञायते ।

तथाच संस्कृतभाषाया जगदुपकारकशक्तिरिदानीमप्यबाधिता जाग्रत्येव । एकैकदा सुप्तांतर्गूढा शक्तिर्जागृतापि दृश्येत । एवं विविधशक्तिसंपन्नायाः संस्कृतभाषाया उपयोजनं विशेषतो भारतीयानां तु अत्यंतं जीवनार्थे आवश्यकमेव ।

अतः संस्कृतभाषायाः संवर्धनाय संरक्षणाय च बद्धपरिकराया मधुरवाण्याः स्थैर्यसंपादनाय च तदुपयुक्तस्वतंत्रमुद्रणालयस्थापनाद्यर्थं संस्कृतप्रेमिणः सर्वे पुरो भूत्वा शक्तिमनिक्रम्य धनसाहाय्यं कृत्वा परममौदार्यं आविष्कुर्वंतु । केचनमहोदारा एतदर्थे धनमार्पयन्नेव । पर्याप्ते धने हस्तगते स्वतंत्रतया मुद्रणालयः स्थाप्यते । मुद्रणालयः तथाच संगृहीतमवशिष्टं सर्वकार्यार्थं धनमपि अर्हत्तमविश्वस्तसा (ट्रस्ट) त्करणीयमिति संपादका अभिप्रयंति । आनुकूल्ये लब्धे कर्नाटकमरराष्ट्रहिन्दीभाषाभिः सह आंग्लभाषया संस्कृतभाषाशक्तिसंपद आविष्कर्तुं एकां त्रैमासिकीं पत्रिकां संप्रकाशयितुमपि संकल्पो वर्तते । तथा च अखिले भारते संस्कृतविषयकमान्दोलनं प्रवर्तयितुं संस्कृतभाषायामेव साप्ताहिकं पत्रमेकं प्रकटयितुमुत्सहंतेच । तथा संस्कृतभाषायामनर्घ्यरत्नसदृशान् प्राचीनानपि ग्रन्थान् प्रकाशयितुमस्ति च योजनामीषाम् । तदर्थे संस्कृतग्रन्थभाण्डारस्य संग्रहोप्यपेक्षितः । एतदादिसर्वकार्यनिर्वाहाय संपादकानामुत्तेजनप्रोत्साहसंवर्धनाय च सर्वे संस्कृतानुरागिणः संस्कृतेरभिमानिनश्च स्वहस्तपरहस्तैरपि अनुकरणीयमादर्शरूपं धनवितरणरूपं साहाय्यमाचरंतु इति वयमभ्यर्थयामहे.

(एतदधः प्रार्थताकृतां नामानि तत्तन्नगरनिवासिनां वर्तंते । विस्तरभिया केषांचिदेव नामानि अत्र निर्दिष्टानि. स्वाक्षरविन्यासेन कार्यस्यास्य सहानुभूतिप्रदर्शन पूर्वकमाश्वासयंतः स्वनामाप्रकाशनं क्षाम्यन्तु इत्यभ्यर्थयामहे.)

बेळगांव. १ श्री. दत्तात्रय वेंकटेश बेळवी सभासद मुंबई कौन्सिल
२ बळवंतराव वेंकटराव पोतदार रिटायर्ड स्माळकाज जज्ज
३ बळवंतराव नागेशराव दातार व्हायिस प्रिन्सिपाल लॉ. कॉलेज.
४ श्री. एम्. पी. वाली एम्. ए. ५ डॉ. हणमंतराव सावणूर

एल्. एम्. एस्. ६ श्रीं. शामराव विडी रिटा. डे. एज्यू. इन्स्पेक्टर इत्या.

पुणें. १ साहित्यसम्राट श्री एन्. सी. केळकर. २ डॉ. के. एन्. वाटवे. ३ पं. पुरुषोत्तमशास्त्री रानडे अध्यक्ष गी. वा. सभा. ४ डॉ. बी. आर. गोकर्ण एम्. बी. बी. एस्. ५ व्याकरणकोविद गणेशशास्त्रीशेंडे. ६ त्र्यंबकशास्त्रीआपटे आयुर्वेदाचार्य.

कोल्हापूर. रा. ब. कृ. ना. पण्डितराव डि. जज्ज रिटायर १. पं. बाळाचार्य खुपेरकरशास्त्री २. प्रो. ग. श्री. हुपरीकर राजाराम कॉलेज. प्रोफेसर ३.

मुंबई. डॉ. प्रो. अ. वा. गजेंद्रगडकर एम्. ए. पी. एच्. डी. एलफिस्टन् कॉलेज.

दक्षिणहैद्राबाद. प्रो. विनायकराव गोकाक एम्. ए. ( आक्सफर्ड ) १ जी. कृष्णाचार्य हायकोर्ट वकील, २

गद्वाल. पं. वाचस्पति गुण्डेराव हरकारे डि. जज्ज स्टेट गद्वाल.

विजापूर १ श्री. अनंतराव असुंडी रिटायर्ड डि. जज्ज. २ आयुर्वेदतीर्थ अनंताचार्य आद्य निखिलकर्नाटकआयुर्वेद भू. पू. सम्मेलनाध्यक्ष. ३ पं. व्याकरणसाहित्यशिरोमणि वेदांतविद्वान् सीतारामाचार्यउडुपी. ४ श्री. वेंकटरावपर्वती वकील. ५ डॉ. गोविंदराव मंगळवेढे इत्या.

## निधिसाहाय्यदातृणां नामानि.

| | | |
|---|---|---|
| १ | श्रीमत्परमहंसेत्यादिबिरुदालंकृताः श्रीश्रीमत्सुब्रह्मण्यमठाधीश्वराः श्रीश्रीविश्वज्ञातीर्थश्रीचरणाः | १०० |
| २ | श्री. नारायणराव स्वामिराव लोकूर हायकोर्ट जज्ज मुंबई | १०० |

| | | |
|---|---|---|
| ३ | श्री. पी. बी. गजेंद्रगडकर हायकोर्ट जज्ज मुंबई | १०० |
| ४ | श्री. शेठ श्रीचिरंजीलाल लोयलका मुंबई | १०० |
| ५ | श्री. के. एच्. कव्वूर व्यापारी मुंबई | २५० |
| ६ | रा. ब. कृ. ना. पण्डितराव रिटायर डि. जज्ज कोल्हापूर | १०० |
| ७ | श्री. वळवंतराव पोतदार रिटा. स्मा. जज्ज बेळगांव | १०० |
| ८ | पं. वाचस्पति गुण्डेराव हरकारे डि. जज्ज संस्थान गद्वाल | १०० |
| ९ | पं. तर्कतीर्थ नीलकण्ठ शिवाचार्य हूली बृहन्मठाध्यक्षाः | २५ |
| १० | श्रीनिवासराव मासूर बेळगांव | २५ |
| ११ | श्री. नानासाहेब पोतदार सबजज्ज ( बेळगांव ) | २५ |
| १२ | श्री. रंगाचार्य जाहगीरदार हायकोर्ट वकील मुंबई | २५ |

## आश्वासनप्रदातारः

१ श्रीश्रीमत्परमहंसेत्याद्यनेकविरुदालंकृताः श्रीमन्मध्वासिद्धान्तप्रतिष्ठापनाचार्या जगद्गुरवः श्रीश्रीमदुत्तरादिमठाधीश्वराः श्रीसत्याभिज्ञतीर्थश्रीमच्चरणाः

२ श्रीमत्परमहंसेत्यादिविरुदालंकृता द्वारकापीठाधीश्वराः श्रीजगद्गुरुश्रीशंकराचार्यश्रीअभिनवसच्चिदानन्दतीर्थश्रीचरणाः

३ श्रीमत्परमहंसे त्यादिविरुदालंकृताः श्रीश्रीभण्डारगिरिमठाधीश्वराः श्रीचरणाः.

४ श्रीश्रीमत्परमहंसेत्याद्यनेकविरुदालंकृताः उडुपीश्रीपेजावरमठाधीश्वराः श्रीविश्वेशतीर्थश्रीचरणाः

५ श्रीश्रीमत्परमहंसेत्यादिविरुदालंकृताः श्रीभीमनकट्टेमठाधीश्वराः

## प्रतिवत्सरं मूल्यतः अधिकधनदातारः

| | | |
|---|---|---|
| १ | श्रीमत्परमहंसेत्यादिविरुदालंकृताः जगद्गुरुश्रीशंकराचार्याः कुर्तकोटि. पंचवटी. नासीक. | २५ |
| २ | श्रीमंतमहाराणी आदिलक्ष्मी अम्मनवरू गद्वाल संस्थान | २५ |
| ३ | सर्. जी. व्ही. बेवूर आय. सी. एस्. न्यू-दिल्ली | २५ |
| ४ | श्रीमन्मध्वसिद्धांतोन्नाहिनीसभा चिर्तानूर. तिरूपति | २० |

| | | |
|---|---|---|
| ५ | श्री. नटेशअय्यरमहोदया ॲडव्होकेट मदुरा कार्याध्यक्षाः वर्णाश्रम स्वराज्यसंघ | |
| ६ | श्री. चिकित्सकचूडामणिः विश्वेश्वरदयालुशर्मा हरिहरौषधालयाध्यक्षः इटावा | २५ |
| ७ | श्री. रं. ह. भालुंकर मेनरोड लष्कर पुणे | १० |
| ८ | पं. संस्कृतसाहित्यचंद्रिका क्षमाबाईराव मुंबई | १० |
| ९ | डॉ. बी. आर, गोकर्ण एम्. बी. बी. एस्. पुणे | १५ |
| १० | पं. बदरीप्रसादशास्त्रीपपुरणासंस्कृतशालाध्यापकः | १० |
| | | १० |

---

मुंबईहरिश्चर्न्द्रव्यांकगव्हर्नरमहोदयाः सर् सी. डी. देशमुखमहाभागाः सर. जी. व्ही. बेवूरमहाभागाः महाराष्ट्रसाहित्यसार्वभौमा न. चिं. केळकरमहाभागाः न्या. मू. राजाध्यक्षमहाशया अन्येच तते महाभागा मधुरवाण्यां अनुपमां प्रीतिमाचरंतीति बहूपकारं स्मरत्यसौ.

---

# वृत्तान्तसारः

---

माघशुक्लाष्टम्यां रवौ फेब्रुवारीदशमे तारके मधुरवाण्या एकादशवर्षारंभनिमित्तो महोत्सवः सायं पंचघण्टावादनावसरे सुप्रसिद्धसंस्कृतमहाराष्ट्रसाहित्यसेवकानां श्रीसुरसरस्वतीकृपाप्रसादभाजनानां पुरुषोत्तममंगेशलाड आय. सी. एस्. डि॥ जज्ज बेळगांव इत्येतेषामाध्यक्ष्येण भविष्यति । तद्दिवसोदंतः अध्यक्षभाषणांशश्च अग्रिमांके प्रकाशयिष्यते.

---

अखिलभारतकेंद्रशासनसभाया आध्यक्ष्यपदे बहुमतेन श्रीमान् माळवणकरमहोदयः कांग्रेसपक्षीयो नियोजितः । मुस्लिमलीगपक्षीयाः सर्वेकारेण संगता अन्यमेकमध्यक्षपदे नियोजयितुं प्रयत्य कांग्रेसपक्षीयैः पराजिताश्च.

---

# ग्राहकेषु निवेदनम्

मधुरवाणीप्राणायमानाः प्रियपाठकाः प्रेमपुरस्सरमावेदयामो वयं यत् स्वतंत्रमुद्रणालयाभावात् अक्षरयोजकवैरल्याच्च नियतकाले मधुरवाणीं प्रकाशयितुं ना पारयाम वयमिति नितरां विषीदति नश्चेतः । कार्तिकशुक्लप्रतिपदि प्रथमांकं प्रयच्छाम इति प्रथममावेदयन्मुद्रणालयाधिकृतः । तदावेदनविश्वासेन कालिदासांकातिमपृष्ठे तथा प्राकाशयाम । परं तदवधौ कालिदासांकमपि दातुं न प्राभवंस्ते । अतः स्वतंत्रमुद्रणालयसंपादनप्रयत्नो महानारब्धोऽस्माभिः। प्रयत्ने सफले नियतकाले मधुरवाणीं सर्वथा प्रकाशयामहे । तावत्पर्यंत-माश्वासयामहे ग्राहकान् यत् प्रतिमासं नियतकाले अप्रकाशनेऽपि यथानुकूलं प्रत्यंकं चत्वारिंशत्पृष्ठसंख्यया वत्सरावधौ द्वादशांकपृष्ठपरिपुष्टानि पुस्तकानि दास्यामो वयमिति । नात्र सर्वथा संशयलेशः । सर्वथा विश्वसंतु सर्वे ग्राहकाः यावच्छक्यते त्वरया समये प्रकाशयितुमंकान् प्रयतामहे तावत् । नास्ति किलास्मासु तंद्रा आलस्यं वा । नाप्यनुत्साहः । न च साहाय्यवैधुर्यम् । नचापि ग्राहकविरागः । न च लेखकवैरल्यम् । सत्यामपि सर्वविधसामग्र्यां प्रकाशन-साधनेषु प्रधानभूतो मुद्रणालयः । स च नास्माकमायत्तः । नियतसमये प्रकाशनेन ग्राहकेषु विशिष्टविश्वाससंपादनार्थं महान् प्रयत्नोऽस्माकं परं किं कुर्मः परायत्ते कर्मणि । व्ययभारः पूर्वतोष्टगुणतोधिकोपि निर्व्यूढः सहसा । तथापि नियते काले प्रकाशयितुं नानुकूल्यम् अतो निरुपायतया मौनमवलं-बामः । स्वतंत्रमुद्रणालये जाते नियते काले मधुरवाणीं प्रकाशयामः सर्वथा । तथाच कालानुकूल्ये लब्धे साप्ताहिकीमपरां प्रकाशयितुमुत्सहामहे च । पुनरेक-वारमाश्वासयामो ग्राहकान् मधुरवाणी न सर्वथा प्रतिबद्धप्रकाशा भवति । नियते अनियते वा काले यथासंभवं विविधविषयोपबृंहिता दृष्टा दृष्टा च सुरसरस्वती-सेवायां बद्धपरिकरा जागर्ति इति विश्वसंतु तत्र भवंत इति ।

तथाच वार्षिकं मूल्यं रूप्यकचतुष्टयं अस्मत्प्रार्थनामनपेक्ष्यैव प्रेषयंतु । तथा ग्राहकानितरान् यथासंभवं संगृह्णंतु । सर्वे संस्कृतप्रणयिनः स्वानुहितायाव मधुरवाण्यां स्निह्यंतु । यथाशक्ति मुद्रणालयनिधेरर्थे अनुरूपं धनं वितरंतु दापयंतु च परहस्तेनापीति सांजलिबंधं साग्रहं सबहुमानं सविनयं सानन्दं संप्रार्थयामहे ।

| | | |
|---|---|---|
| ५ | श्री. नटेशअय्यरमहोदया अॅडव्होकेट मदुरा कार्याध्यक्षाः वर्णाश्रम स्वराज्यसंघ | २५ |
| ६ | श्री. चिकित्सकचूडामणिः विश्वंभरदयालुशर्मा हरिहरौषधालयाध्यक्षः इटावा | १० |
| ७ | श्री. रं. ह. भाळुंकर मेनरोड लष्कर पुणे | १० |
| ८ | पं. संस्कृतसाहित्यचंद्रिका क्षमाबाईराव मुंबई | १५ |
| ९ | डॉ. बी. आर, गोकर्ण एम्. बी. बी. एस्. पुणे | १० |
| १० | पं. बदरीप्रसादशास्त्रीपपुरणासंस्कृतशाळाध्यापकः | १० |

---

मुंबईरिझर्व्हब्यांकगव्हर्नरमहोदयाः सर् सी. डी. देशमुखमहाभागाः सर. जी. व्ही. बेवूरमहाभागाः महाराष्ट्रसाहित्यसार्वभौमा न. चिं. केळकरमहाभागाः न्या. मू. राजाध्यक्षमहाशया अन्येच तते महाभागा मधुरवाण्यां अनुपमां प्रीतिमाचरंतीति बहूपकारं स्मरत्यसौ.

---

# वृत्तान्तसारः

---

माघशुक्लाष्टम्यां रवौ फेब्रुवारीदशमे तारके मधुरवाण्या एकादशवर्षारंभनिमित्तो महोत्सवः सायं पंचघण्टावादनावसरे सुप्रसिद्धसंस्कृतमहाराष्ट्रसाहित्यसेवकानां श्रीसुरसरस्वतीकृपाप्रसादभाजनानां पुरुषोत्तममंगेशलाड आय. सी. एस्. डि॥ जज बेळगांव इत्येतेषामाध्यक्ष्येण भविष्यति । तद्दिवसोदंतः अध्यक्षभाषणांशश्च अग्रिमांके प्रकाशयिष्यते.

---

अखिलभारतकेंद्रशासनसभाया आध्यक्ष्यपदे बहुमतेन श्रीमान् माळवणकरमहोदयः कांग्रेसपक्षीयो नियोजितः । मुस्लिमलीगपक्षीयाः सर्वकारेण संगता अन्यमेकमध्यक्षपदे नियोजयितुं प्रयत्य कांग्रेसपक्षीयैः पराजिताश्च.

---

# ग्राहकेषु निवेदनम्

मधुरवाणीप्राणायमानाः प्रियपाठकाः प्रेमपुरस्सरमावेदयामो वयं यत् स्वतंत्रमुद्रणालयाभावात् अक्षरयोजकवैरल्याच्च नियतकाले मधुरवाणीं प्रकाशयितुं ना पारयाम वयमिति नितरां विषीदति नश्चेतः । कार्तिकशुक्लप्रतिपदि प्रथमांकं प्रयच्छाम इति प्रथममावेदयन्मुद्रणालयाधिकृतः । तदावेदनविश्वासेन कालिदासांकांतिमपृष्ठे तथा प्राकाशयाम । परं तदवधौ कालिदासांकमपि दातुं न प्राभवंस्ते । अतः स्वतंत्रमुद्रणलयसंपादनप्रयत्नो महानारब्धोऽस्माभिः। प्रयत्ने सफले नियतकाले मधुरवाणीं सर्वथा प्रकाशयामहे । तावत्पर्यंतमाश्वासयामहे ग्राहकान् यत् प्रतिमासं नियतकाले अप्रकाशनेऽपि यथानुकूलं प्रत्यंकं चत्वारिंशत्पृष्ठसंख्यया वत्सरावधौ द्वादशांकपृष्ठपरिपुष्टानि पुस्तकानि दास्यामो वयमिति । नात्र सर्वथा संशयलेशः । सर्वथा विश्वसंतु सर्वे ग्राहकाः यावच्छक्यते त्वरया समये प्रकाशयितुमंकान् प्रयतामहे तावत् । नास्ति किलास्मासु तंद्रा आलस्यं वा । नाप्यनुत्साहः । न च साहाय्यवैधुर्यम् । नचापि ग्राहकाविरागः । न च लेखकवैरल्यम् । सत्यामपि सर्वविधसामग्र्यां प्रकाशनसाधनेषु प्रधानभूतो मुद्रणालयः । स च नास्माकमायत्तः । नियतसमये प्रकाशनेन ग्राहकेषु विशिष्टविश्वाससंपादनार्थे महान् प्रयत्नोऽस्माकं परं किं कुर्मः परायत्ते कर्मणि । व्ययभारः पूर्वतोष्टगुणतोधिकोपि निर्व्यूढः सहसा । तथापि नियते काले प्रकाशयितुं नानुकूल्यम् अतो निरुपायतया मौनमवलंबामः । स्वतंत्रमुद्रणालये जाते नियते काले मधुरवाणीं प्रकाशयामहे सर्वथा । तथाच कालानुकूल्ये लब्धे साप्ताहिकीमपरां प्रकाशयितुमुत्सहामहे च । पुनरेकवारमाश्वासयामो ग्राहकान् मधुरवाणी न सर्वथा प्रतिबद्धप्रकाशा भवति । नियते अनियते वा काले यथासंभवं विविधविषयोपबृंहिता दृष्टा द्रष्टा च सुरसरस्वतीसेवायां बद्धपरिकरा जागर्ति इति विश्वसंतु तत्र भवंत इति.

तथाच वार्षिकं मूल्यं रूप्यकचतुष्टयं अस्मत्प्रार्थनामनपेक्ष्यैव प्रेषयंतु । तथा ग्राहकानितरान् यथासंभवं संगृण्हंतु । सर्वे संस्कृतप्रणयिनः स्वदुहितरीव मधुरवाण्यां स्निह्यंतु । यथाशक्ति मुद्रणालयनिधेरर्थे अनुरूपं धनं वितरंतु दापयंतु च परहस्तेनापीति सांजलिबंधं साग्रहं सबहुमानं सविनयं सानंदं संप्रार्थयामहे.

---

# नियमावलिः

(१) मधुरवाणीं नाम्नीं यं संस्कृतपत्रिका प्रत्याङ्ग्लमासप्रथमसप्ताहे प्रकाश्यते

(२) अस्यां प्रायः प्रत्यङ्कमेका लघुकथा, सनातनधर्मविषयकः प्रबन्धः प्राचीनसाहित्यं चान्ये प्रचलितविषयका विवेचनात्मकालेखाः प्रकटीक्रियेरन् सनातनधर्मद्रोहिणो लेखा नावकाशं विन्देरन्। ग्राहकेतरेषां लेखाः पद्यानि वा न प्रकाश्येरन् ।

(३) पत्रिकाया अस्याः अग्रिमदेयं मूल्यं मार्गव्ययसहितं रूपकचतुष्टयम् । अंकस्यैकस्याणकषटकम् मूल्यम् । द्वीपान्तरवासिनां तु वार्षिकं मूल्यं पञ्चरूप्यात्मकम् । विना मूल्यमादर्शसंचिका न प्रदीयेत । तदिच्छुभिश्च चतुराणकमूल्यानि शुल्कपत्राणि प्रहीयन्ताम् ।

(४) मधुरवाण्याः श्रेयोभिवृद्धये पञ्चरूपकाणां दातारः सहायकाः, दशरूपकदायिनः पोषकाः, पञ्चविंशतिरूपकप्रदा अनुग्राहकास्ततोऽप्यधिकं यच्छन्ता संरक्षका इति व्यपदिश्येरन् ।

(५) मधुरवाण्यां नीरसा असुवाच्याक्षरा एकपार्श्वे एवालिखिता लेखाः नावसरमासादयेयुः । लेखपरिवर्तनादिषु निरनुयोज्याधिकाराः खलु सम्पादकाः । अप्रकाशिता लेखा विना प्रापणव्ययं न प्रतिप्रहीयेरन् ।

(६) लेखा, विज्ञापनानि, समालोचनापेक्षिणो ग्रन्थाः, पत्रिकार्थेत्यादि सकलं मधुरवाणी कार्यालय बेळगांव नं १६९८ इति संकेतेन प्रेष्यम् ।

त्रं मूल्यधनं वा प्रेषयद्भिः निजसंकेतादिकं देवनागरीलिप्यैव सुस्पष्टं विलेखनीयम् । भूतपूर्वैर्ग्राहकैः पत्रस्य धनस्य वा प्रेषणसमये ग्राहकसंख्यालेखनं नैव विस्मरणीयम् । उत्तरप्रेप्सुभिरवश्यं प्रेषणीयः प्रापणव्ययः ।

प्राप्तिस्थानम्

मधुरवाणी कार्यालय, १६९८ बेळगांव.

Printed at Veer-bharat Printing Press, Belgaum by its proprietor A. P. Chougule and Published by Shriniwasacharya Burli at House No. 1698 Belgaum.